श्रीः

# योगि श्री नागलिङ्ग शिवाराध्य कृतौ
## श्री ब्रह्मपथे

*

शिवाद्वैतपर्यङ्किकाख्यव्याख्यासनाथे
दक्षिणभागः
## श्री व्यासपथः । २ ।

---

केवलाद्वैतरामानुजीयमाध्वपथप्रतिषेधरूप
भागत्रय सहितः
विजयवाडवास्तव्यानां
श्री शिंगराजु सुब्बारायमहाशयानाम्
धर्मपत्न्या, सत्यप्रसूनांबया, दत्तपुत्रेण
श्री कृष्णमोहन्रायेणच
धनप्रदानेन
मुद्रापितः
१९३७

Registered] [मूल्यम् १-०-०

तेनालि भारती मुद्राक्षरशालायां मुद्रितः ।

श्रीः

श्री भारद्वाजकुलजलधिकौस्तुभ

# योगि श्री नागलिङ्ग शिवाराध्य कृतिः

# श्री ब्रह्मपथः ।

*

श्री शिवाद्वैतपर्यङ्किकाख्यव्याख्यासनाथः
भागत्रयसहित वेदपथ व्यासपथात्मक
सव्यासव्यभाग संयुतः ।

*

श्री शैवमहाजनानां
धनसाहाय्यकेन
मुद्रापितः
१९३७

Registered] [मूल्यम् २-०-०

# వంశవృక్షము

శింగరాజు మల్లపరాజుగారు

- సుబ్బారాయుడుగారు
- లింగయ్యగారు
  - సుబ్బారావుగారు
    - భార్య: మున్నంగి సోమయ్యగారి కుమార్తె శింగరాజు సత్యప్రసూనాంబగారు
    - దత్తకుమారుడు: శింగరాజు క్రిష్ణమోహన్ గారు
  - రాజేశ్వరరావు గారు
  - మల్లపరాజుగారు
- రాజయ్యగారు



వీరి ధనసాహాయ్యముచే సుబ్బారావుగారి గౌరవార్థమై శ్రీ వ్యాసపథ మనే ఈ గ్రంథరాజము ముద్రింపింపబడియెను.

శ్రీ బ్రహ్మపథగ్రన్థ విరచనమునకును, బ్రహ్మపథములోని
శివాద్వైతపథవిధి, కేవలాద్వైతపథప్రతిషేధములను
భాగముల ముద్రణమునకును ధనప్రదాతలైన
వరంగల్ నగర వాస్తవ్యులగు భక్తమాహేశ్వరులు.

1. కొడిమేల భోగసోమలింగమూర్తిగారు
2. కొమరవెల్లి కాళయ్య
3. ఆకారపు చెన్నయ్య
4. ఆకారపు నరసింగమ్
5. రామిణి మల్లయ్య
6. కొండూరి రామలింగమ్
7. కొమరవెల్లి బాలరాజు
8. అల్లాడి కేదారు
9. గుండా ముక్తిలింగమ్
10. గుండా పుల్లయ్య
11. చీదిరాల మల్లయ్య
12. రవ్వా వెంకన్న
13. రవ్వా రామనాథం
14. నూకా నాగయ్య
15. అడ్డగూడూరు రామన్న
16. మద్ది సోమయ్య
17. భూపతి రత్నంగారి రామలింగం

---

శ్రీ బ్రహ్మపథములోని శివాద్వైతపక్షవిధి, కేవలాద్వైతపక్ష
ప్రతిషేధము నను భాగముల ముద్రణమునకు
ధనప్రదాతలైన వరంగల్ నగర వాస్తవ్యులగు
భక్తమాహేశ్వరులు.

1. ముదిగొండ పాపయ్యశాస్త్రిగారు (ఈమని)
2. ముదిగొండ నాగభూషణశాస్త్రిగారు
3. ముదిగొండ శంకరశాస్త్రిగారు
4. ముదిగొండ చినవీరభద్రయ్యగారు
5. ముదిగొండ రామలింగంగారు
6. ముదిగొండ సదాశివయ్యగారు
7. నిర్మల శంకరయ్యగారు (నిర్మల)
8. శివపురం మల్లయ్యగారు
9. తొడుపునూరి క్రిష్టయ్య
10. అడ్డగూడూరి లింగమ్మ

---

# पीठिका

आर्यमिश्राः पंडितमणयः किंचि दिहावधत्त !

इह यद्यपि विद्यन्तएव मनीषिजनमनीषाकनकलताकषणशिला कल्पानि शास्त्राण्यनल्पसंख्याकानि, तथापि तेषु परमपुमर्थनिदानं नान्य न्मन्यामह उत्तरस्मान्मीमांसाशास्त्रात् । अत स्तत्रैव कृतः परिश्रम स्साफल्य मुपलभेतेति केवलाद्वैतभाष्य मदर्शि सविमर्श मस्माभिः, यतश्च तदेव श्रीहर्षनागेशभट्टादिभि रन्तर्वाणिमणिगणै रामोदितम् । आतश्च तादृक्षविद्वन्महोक्षरूढविश्वासेनैव लघुवासिष्ठरामायणादिक मांध्री कृतं यौवनारम्भे, ततश्च याव द्याव द्विमृष्टमासी दद्वैतभाष्यं तावत्ताव न्मूलविवरणयो वैमत्य मनन्त मतिस्पष्टं प्रदृष्ट मासीत्, ततश्च विद्य मानानि श्रीकंठीयादीन्यपि भाष्या ण्यवालोकिषत, भाष्यं पुरातनं प्रत्या ख्याय निर्मितेषु कियान्गुण स्सनुपलभ्येतेति, एवं समुपलब्धभाष्यचतु ष्टयविमर्शनसिद्धं निजंभाव मपह्नोतु मक्षमतया सत्यभंगभया न्निबद्धो व्यासपथः पुरस्तात् । परस्ताच्च, केवलाद्वैतगतवैयासिकसूत्रविरोधस्य केवलाद्वैते श्रुत्यन्तानुकूल्यं वैयासिकमीमांसायां तत्प्रातिकूल्यंच विद्य मानमेव निदानं केश्चि द्विपश्चिद्भि निगद्यमानं श्रावंश्रावं तत्परीक्षितु कामनया विवृष्टा निगमान्ताः ॥

अथ, केवलाद्वैते निगमान्तानामपि भूयसोऽनांजस्यस्य दृष्टतया व्यरचि वेदपथः, ततो द्वावपि सम्मेल्य सुघटितो ब्रह्मपथः, सोयं श्रीकंठीय मनुबध्नाति, यतश्च, इहोपलभ्यमानेषु ब्रह्मसूत्रभाष्येषु पुराण मपि श्रीकंठीयं सर्वांगसुंदरं प्रभासते, श्रुतिप्रामाण्यशरणीकरणा दार्जव

समुपार्जनाच्च, अत्र यद्यपि केपि लिंगधारणविधिसंक्षेपं लोप मुदाहरन्ति सारतरार्थवत्तया भाष्यान्तरेभ्य स्संक्षेपरूपेऽस्मिन् त म्महान्तं गुणमेव मन्महे, तस्मिन्नदर्शनं लिंगधारणस्य कथं गुणइति मास्मशंकिढ्वं, यदि स्या त्तस्याऽदर्शनमेव तर्हि वाच्यता मियादेव, अत्र तत् परिहृश्यतएव, तथाहि, सहकार्यन्तरविध्यधिकरणे, पाशुपतव्रतधारिणा म्मुक्तिरेव फलमिति, पाशुपतव्रतप्रतिपादनदर्शनात् । नच, तदुदीरितस्य पाशुपत व्रतस्य भस्मरुद्राक्षमालधारणरूपत्वमिति शंक्यम्, तत्र लिंगधारणानुष्ठान प्रकाशकमंत्राणा मुदाहृतत्वेन तस्य भस्मरुद्राक्षशिवलिंगधारणरूपत्वाव गमात् । किंच, क्रियासारे, श्रीनीलकंठाचार्येण श्रीकंठीये भाष्ये बहु ष्वधिकरणेषु लिंगधारणविधिपरिग्रह स्योदाहरणेन प्राचीनकोशे ष्वस्मि न्भाष्ये लिंगधारणप्रतिपादनपरभागस्य भूयसएव सद्भावावगमेनाऽलिंगि जनपरिष्कृतिमूलमेवाधुनिककतिपयकोशेषु लिंगधारणविधिभागस्याऽ स्फुटत्वमि त्यास्ताम् ॥

ततश्च ये केचि दस्य पुरातनत्वे सन्दिह्यन्ति, ता नधिकृत्य किंचि चिन्तयामः । शंकरविजये, शिवतत्परसूत्रभाष्यकर्ताइति श्रीकंठा चार्यस्य विशेषणेन, तत्र श्रीकंठाचार्यस्य शंकराचार्यसमकालिकत्वोक्ता वपि शंकराचार्या त्पुरातनानामेव बहूना माचार्याणां तत्समकालिकत्व ग्रहणेन भाष्यकर्तु श्श्रीकंठाचार्यस्यापि ततः पुरातनत्व मवगम्यते । अपिच, श्रीमद्भि रप्पयदीक्षितेन्द्रै श्शिवार्कमणिदीपिकायाम्, व्यास सूत्र मिदं नेत्रमिति पद्यविवरणे श्रीकंठभाष्यस्य शांकरादिभ्यो भाष्येभ्य प्राचीनत्व मभाणि, तस्मा त्त त्पुरातनमित्यविवादं परैरेवाऽभ्युपगमात् ॥

अथात, वसन्तोत्सवे पिटकापतनमिव कापिपातनिका शिव देवलकानां । यथा, भगवा न्भाष्यकार श्श्रीकंठभगवत्पाद स्स्वकुलजइति तद्धि लोकोत्तरभाष्यकर्तु श्श्लाघास्पदमिति यदि मनीषिणोऽभ्यनुजानीयु र्नैतत्राऽस्माक माग्रहः, यतश्च, महाभारते, राजधर्मपर्वणि पट्सप्ततितमे ध्याये ॥

श्लो ॥ आह्वायका देवलका नाक्षत्रा ग्रामयाजकाः, एते ब्राह्मण चांडाला महापथिकपंचमाइति ॥ स्कान्देपि, शिवदेवलका नुद्दिश्य तन्मलसंज्ञया व्यवहारो दृश्यते, अतएव, तन्मलशब्दभयेन तंवलशब्दे नान्ध्रदेशे शिवदेवलकाना मपरिहारो व्यवहारो दरीदृश्यते, तस्मा दयं भगवान्भाष्यकारश्शिवदेवलकान्ववायो नभवति, किन्तुलोकाराध्यकुल जलधिप्रसूतएवे त्यस्माक माशयः, भाष्यकृतः श्रीकाळेश्वरक्षेत्रवासित्वं परेऽप्यभ्यनुजानन्ति, काळेश्वरगृहनामधेया लोकाराध्या इदानीमपि बहव स्समुपदृश्यन्ते, ततोपि यथोक्तमेव युक्त मुत्पश्यामः ॥

अथ प्रकृत मनुसरामः, तदेवं पन्थानं श्रीकंठीय मनुरुन्धन्नपि तदितरा न्पथः प्रतिरुन्ध न्नयं निबंधः परेषां किं मुद्वेगकरो भवेदिति कियन्तं कालं न्यक्षेपि गुप्तमेव, अथचैव मस्फुरत् । यथा नायं साधु. रध्यवसायः, किं सर्वेपि भवेयु र्विषमधिषणाः, अथ, नकिंतु कतिपयेपि वर्तेर न्निष्पक्षपातचेतसः, यतश्च, कुत्रापि कदापि केनापि याथार्थ्यपेक्षा वीक्षित स्साफल्य मश्नुवीत, अथवा, यथाकामं विमृशन्तु दोषज्ञाः कृति मिमां, विमर्शे यदीयं भज्येत, तत्र नास्माक माग्रहः, यतश्च नास्म दभिमतेनैव समयेन विजेतव्यमि त्याशास्महे, किन्तु समयेन याथार्थ्य

वंधुरेणैव, मन्महे याथार्थ्यंच श्रुतिसूत्रयो रार्जवसिद्धं, यतश्च, आर्जवं प्रतिपन्नस्य विनाशाय ह्यनार्जवमि त्याचचक्षे भगवा न्पाराशर्यः, यदा र्जवोपार्जितं तदेव सत्यम्, सत्यमेव जयते नानृतमि त्यक्तृतकवाणी विल सति, तस्मा दस्मदन्तःकरणदर्पण आर्जवसिद्धतयाऽन्तरात्मना प्रकाशितं दैवा च्छ्रीकंठीयानुबन्धिनं भावं निबध्य समर्पितो विदुषां चरणयोः ॥

अपिच, विदितमेवहि तत्रभवतां विलसन्ति तत्तत्सूत्रभाष्यार्थ प्रसाधनप्रवणानि प्रकरणानि सहस्रशः, श्रीकंठीयस्यतु भाष्यस्य नकि मपि श्रुतिपथं गतमिति, यद्यपि सूत्रभाष्यं श्रीकंठीयं श्रीमद्भि रप्पय मखिशिखामणिभि र्व्याख्यया शिवार्कमणिदीपिकाख्यया भूपितमेव, तथापि, तैरेव शिवाद्वैतनिर्णये मन्दाधिकारिकत्वसंपादनेन दूषितप्राय मेवेतिच, पुरातनस्यापि परस्य ब्रह्मणइवाऽविदितप्रायस्य श्रीकंठीयसूत्र भाष्यस्य याथार्थ्यप्रकटनार्थं प्रतिपिपादयिषितस्य श्रीकंठीयभाष्यार्थ विषयश्रुतिसूत्रांजस्यनिरूपणस्य तदितरभाष्यार्थविषयश्रुतिसूत्रानांजस्यनिरू पण मन्तरेण दुश्शकतया अन्यथानुपपत्त्याऽवशात स्समापतितस्य प्रसंग वशा द्यावदवकाश मसंकोचं विवरणीयतां प्राप्तस्य पक्षान्तरविमर्शनस्य श्रीकंठभाष्यसारस्यसमर्पणएव तात्पर्यं, नतु तदितरपक्षप्रतिक्षेपेऽणीयोपीति मन्वाना एनंनिबन्ध मात्मनीननिर्विशेष मनुमन्यमाना नागरलिपे रस्मद्देशेऽनभ्यस्तप्रायतया लेखकमुद्रापकशोधकप्रमादसंभाविता न्दोषान् क्षाम्यन्त्वितिच सांजलिबन्ध मभ्यर्थ्यन्ते सदया स्सहृदयाः ॥

इति
सुधीजनविधेयो ग्रंथकृत्

---

# भूमिका

इहखलु जेजीयतेऽय मोपनिषदर्थरत्नराशि र्ब्रह्ममीमांसासूत्रराशिः, यमेवैकं प्रणिनाय सकलोपनिषदां तत्वं निर्विचिकित्सं निर्णिनीषु र्भगवा न्बादरायणः ॥

किञ्च, परस्परविरुद्धा नर्थान् राद्धान्तयन्तोपि यस्यैव विवरणेन मताचार्यपट्टभाज स्सुधीसम्राजो मूलस्याऽनुपम म्प्रामाण्य मविवाद मावेदयन्ते चिरात्। तस्याऽस्य महिमा यद्यपि विदितएवेति न स ख्यापन मर्हति, तथा प्यन्योन्यविपरीतानि विवरणानि चालयन्त्येव म्मूलं स्तम्भमि वाकर्षणानि पूर्वपश्चिमानि, तथाहि 'केचन सूत्राणा माशय मद्वैतं साधयन्ति' अन्येच द्वैतं बोधयन्ति, तथा ब्रह्म निर्गुण मेकेभिमन्यते। सगुण मितरे निश्चिन्वते। एव मद्वैतं शुद्ध म्परे, विशिष्ट मपरे, हर म्पूर्वे, हरि मन्ये इति विदितं सुधियाम् ॥

अत्र यद्यपि स्वाभिमता मता स्सूत्रकृदभिप्रेताइति सर्वे प्यभि मन्यत इति सर्वेपि मता स्सूत्रकृत्सम्मताइति केचि दभिप्रयन्ति। तथापि नाऽय मर्थ स्तटस्थाना म्भवति हृदयङ्गमः। तथाहि, यदीदं सूत्रजात मन्योन्यविरुद्ध मर्थ मबोधयिष्य त्तर्हि परस्परव्याघाता दबोधकतया निष्प्रामाण्यमभविष्यत्। ततश्च मते ष्वेकेनैवाऽनयेन भवितव्यम्। एवमपि केचन व्याख्यातृदोष म्मूलएव समारोपयन्ति। तथाच सूत्रा ण्यन्योन्यविरुद्धाना म प्यर्थाना न्दिशन्त्येवाऽवकाशम् विश्वतोमुखत्वात्। तदुक्त मभियुक्तैः, विष्वङ्मुखत्वविभूषणै रिति, त देतेषाम् विरुद्धार्थाभि धायित्वेपि श्लिष्टकाव्यव त्प्रामाण्य मविकलमेवेति। अथ भवतु यथावा प्रामाण्यं सूत्रजातस्य, अनेकेषु मते ष्वेकमेव सूत्रतात्पर्यस्वरससिद्धमिति

ननिर्णेतुं शक्यते तन्निर्णायकहेतो रनुपलम्भात् । नच वैदुष्यस्य निर्णायकत्वं शंक्यम् ॥ विद्वत्स्वपि वैमत्यस्य बहुधा दर्शनेन तस्य तद्धेतुत्वासिद्धेरिति कतिचित् । नक्षमन्तेऽमुं पक्षं विचक्षणाः, तथाच, विश्वतोमुखत्वं नाम नाऽन्योन्यविरुद्धार्थाभिदायित्वम्, किन्तु न्यायसाम्यात्तत्तुल्यबहुवाक्यतात्पर्यनिर्णायकत्वमेव ॥

एवञ्च, शास्त्रस्य परस्परविरुद्धानेकार्थाभिदायित्वंवा? तथाविधस्य बोधकत्वंवा नप्रामाणिकमिति सिध्यति, अत्रैव मपरेऽभिप्रयन्ति, यथा शास्त्रार्थस्य तेजस्तिमिरव दन्योन्यविरुद्धतया प्राग्भि राचार्यैः राद्धान्तितत्वेन तत्र विशेषनिर्णयासिद्धेः सर्वाण्यप्यार्यमता न्यप्रतिष्ठितान्येवेति। इह यद्यपि व्याख्यातृदोषा न्मतानां सर्वेषाम प्यप्रतिष्ठितत्वं नसहेतुकमिति न तन्निरासार्थं प्रयतितव्यम्, तथापि सर्वेष्वपि मते ष्वेकैकस्यापि मतशास्त्रस्य दुरवसानतया विदुषामपि दुर्दर्शतया वर्तमानत्वेन सर्वमतशास्त्रनिरवशेषपरिलोडनपूर्वकविशेषनिर्णयस्य कैमुत्यन्यायभाजनतया विद्वत्स्वपि स्वस्वमतशास्त्राण्येवाऽधीत्य स्वस्वमतवासनासमुपलब्धविश्वासात् स्वीयाएव मता न्याय्याइति तुष्टि मुपगच्छत्स्वपि तटस्थानां चेतस्सु शङ्काशूकस्य तदवस्थतया तदपनोदनाय चिन्तयमान इशास्त्रे णैकार्थपरेणैव भाव्यमिति निश्चिन्वान श्श्रुत्यर्थस्य सूत्रार्थनिर्णयमूलतया, सूत्रार्थस्यच तद्विवरणसाङ्गत्यनिर्धार्यतयाच सूत्रभाष्यार्थविमर्शरूपेण लघुनोपायेन विवक्षितार्थनिर्णायक ङ्किञ्चि त्प्रकरणं निबद्ध मनुजानन्त्वित्यभ्यर्थ्यन्ते निर्मत्सरा विदांवराः ॥

इति
ग्रन्थकृत्

श्री शिवाय गुरवेनमः

# ब्रह्मपथे

## दक्षिणभागः

## व्या स प थः

अव ।। श्रुतिपथनिरूपित मर्थं म्मीमांसार्थनिर्धारणेन सन्तिष्ठापयिषुः मङ्गळादीनीति शास्त्र मनुरुध्य शिष्टाचारश्चाऽनुसृत्य प्रकृतनिर्णिनीपितार्थं शास्त्रमेव वस्तु निर्दिशति । यथा—

मू ।। जैमिन्यादिप्रणीतै स्सुनयपरशुभि र्दारितात्मावरोधः ।
श्रुत्यन्ताहार्यलब्धै र्वचनमणिगणै स्सान्द्र मास्तीर्यमाणः ।
बाढ म्मीमांस्यमानै रपिच गुरुतरै र्घट्टितो न्यायकाण्डैः ।
पन्था वैयासिकोऽय ञ्जयति शिवपदप्राप्तये भक्तिभाजाम् ।। १

व्या ।। तदिति, अयं वैयासिकः पन्थाः भक्तिभाजां शिवपदप्राप्तये जयति । तं विशिनष्टि जैमिन्यादीत्यादिना पादत्रयेण । यथा-राजधानी म्प्रति सुगम म्पन्थान न्निर्मिमीषवः प्रथम म्मार्गावरोधकान्शाखिन श्छिन्दन्ति, तत श्शिलाशकला आस्तृण्वन्ति, तदुपरि बृहच्छिलाभि रामूलाग्र ञ्छन्दयन्तिच ।। एव म्परमपद ञ्जिगमिषूणामप्युपकृतये कश्चि त्सुगमं राजमार्ग न्निर्मिमीषु र्भगवा न्बादरायणः पदवाक्यादितन्त्रान्तरीयन्यायरूपपरशुभि र्मुक्तिपथावरोधभूतबौद्धादिनानाविधमतशाखिनो विच्छिद्य श्रुत्यन्तसूक्तिरूपरत्नजाता न्यास्तीर्यच, तदुपरि सारतरन्यायरूपबृहच्छिला आमूलाग्र म्परिवर्तयन् साक्षा त्परमपदप्रापक ञ्चि द्वाऽम्य मृजु मध्वान न्निर्ममइत्यर्थः ।।

ननु, तत्त्वनिवेदकेषु बहुषु श्रुतिपुराणादिषु विद्यमानेषु किमिति वैयासिकमेव मीमांसाशास्त्रं विशिष्य परिगृह्यतइतिचे त्तर्हि सर्वैर प्याचार्यैः किमि तीदमेव मूलीकृत मात्मभाष्याणा न्ततएवे त्यवेहि ॥

अथ मत्वविशेषः, दुरन्तसंसारार्णवमग्न चेतनजात समुत्तितार यिषुणा कृपालुना परमेश्वरेण समवतारितं वृन्द मुपनिषदाम्, अथापि तदीयं हृदयं कलुषित मनेकै र्मुनिवरै र्विविधदर्शनप्रणयनपरै रिति तदर्थनिर्णयार्थमेव समारचित मिद मुत्तरम्मीमांशास्त्र म्भगवता तादर्थ्ये परिगृहीत नारायणापरावतारेणपाराशर्येण । अत श्श्रुत्यन्तार्थनिर्णयो विद्य तेऽस्मिन्नेव शास्त्रे इत्यविवादम्, अस्य तादर्थ्येन प्रवृत्तत्वात्, अन्यथा निगमान्तार्थनिर्धिधारयिषया प्रवर्तित मिदं शास्त्र मानर्थक्य मश्नुवीत, अतश्च श्रुत्यन्तार्थ माविश्चिकीर्षुभि राचार्यै रखिलैर पीदमेवाऽवशतो व्याख्येय मासी च्छास्त्रम्, एवमपि नानाविधमतप्रवर्तनकुतूहलिभि स्स्वस्वानुकूल्यार्थकल्पनचतुरै राचार्यैः प्रकृतशास्त्रार्थकलुषीकरणवशा त्तन्मूल श्श्रुत्यर्थोपि कलुषितएवेति प्रकृतशास्त्रार्थनिर्णय मन्तरा निग मान्तार्थनिर्णयासिद्धेः प्रकृतशास्त्रीयभाष्यार्थक्लिष्टाक्लिष्टत्वविमर्शन मन्तरेण च प्रकृतशास्त्रार्थनिर्धारणासिद्धे र प्येतदेव प्रधानतया परिग्रहणीय मासीदिति हृदयम् ॥

## केवलाद्वैतपथप्रतिषेधः

### शास्त्रारम्भानुपपत्तिः

अथ ॥ अथ केवलाद्वैते सूत्रविरोध म्प्रदर्शयिष्यं स्तन्मते शास्त्रा रम्भएव नसम्भवती त्याह ॥

मू ॥ त्वत्पक्षे शास्त्र मासी दविषय मथचाऽनर्थकं सुप्रसिद्धं
शास्त्रारम्भार्थसूत्राण्यपि तवहि मते नैव तात्पर्यवन्ति ।
प्रत्यक्ष स्वेष्टसिद्धा वथखलु नितरा म्मन्यसे यत्प्रमाणं
शास्त्रारम्भ स्सुसिध्ये त्कथमिव भवतो ब्रू ह्यसम्भावितार्थः ॥ १ ॥

त्वदिति ॥ निर्विशेषत्ववादिनाम्पक्षे शास्त्रारम्भो नसम्भवति विषयप्रयोजनयो रनुपपन्नत्वात् ! तथाच, सामान्येन ज्ञातो विशिष्य नज्ञातोहि विषयः केवल मज्ञाते विशिष्यज्ञातेच जिज्ञासानुपपत्तेः । एवञ्च, निर्विशेषस्य ब्रह्मण स्सामान्येनाऽज्ञातत्वात् विशिष्य ज्ञातु मयुक्तत्वाच्च तस्मि न्जिज्ञासाऽनुपपन्ना ॥

किञ्च, विषयः किम् ब्रह्म ? उत भेदमिथ्यात्वम् ? आहोस्वित् जीवब्रह्मणोरैक्यम् ? नप्रथमः ब्रह्मणो वेद्यत्वानभ्युपगमात्, वेद्यत्वे घटादेरिवाऽननुभूतित्वप्रसङ्गस्योक्तत्वाच्च । व्यावहारिकं वेद्यत्व मस्तीतिचेत् घटस्यापि वेद्यत्वं व्यावहारिकमिति तद्वदेवा ऽननुभूतित्वप्रसङ्गो दुर्वारः, वास्तववेद्यत्वाभावस्य ब्रह्मणि साध्यत्वे घटस्य व्यतिरेकदृष्टान्तत्वं नघटते घटस्य वास्तववेद्यत्वाभावविरहात् ॥

नद्वितीयः दृश्यत्वादिना लिङ्गेन भेदमिथ्यात्व मभिमन्यमानस्य शास्त्रानर्थक्यप्रसङ्गात् । तत्तद्धर्मिग्राहकप्रत्यक्षादिप्रमाणविरुद्धस्य प्रपञ्च मिथ्यात्वस्य यूपादित्यैक्यस्येव शास्त्रेण प्रतिपादनायोगात् शास्त्रस्य निर्विषयत्वं स्यात् । तृतीयश्च कल्पोऽनुपपन्नः ब्रह्मणो वेद्यत्वप्रसङ्गात् । ब्रह्मशब्देन ब्रह्म ण्यवबोधिते कथ न्तस्य जीवस्य चैक्यम् वक्तुं शक्यते? नहि जीवएकइत्युक्ते जीवब्रह्मणो रैक्यं सिध्यति, घटएक इत्युक्ते घटपटे

क्यवत् । यथैक्योपदेशवाक्येषु अयमात्मा ब्रह्मइत्यादिषु शब्दबोध्य सोढव्यम् । तर्हि प्राधान्येन ब्रह्मणएव शास्त्रप्रतिपाद्यत्वं किमि नाभ्युपगम्यते ॥

तथा प्रयोजनञ्च नघटते, तथाहि, प्रयोजनं द्विविधं शास्त्रस्य उपायभूत मवान्तरप्रयोजनं तत्साध्यं परमप्रयोजनंचेति, तत्रेदानी जायमानं वाक्यजन्यज्ञान मनिवर्तकमि त्यविगीतम् । वसिष्ठपराशरकृ द्वैपायनादीनाम प्युत्पन्नं ज्ञान मन्येषा मुत्पत्स्यतइत्य त्यन्तासंभावित तेषा मुत्पन्नंचेत् भेदप्रतिभासो नस्यात्, स निवर्तिष्यतइतिचेत् तत तदभिन्नांना मन्येषामपि निवर्तिष्यतइति न शास्त्र मारम्भणीयं स्या प्रपञ्चस्य सत्यत्वादेव ज्ञाननिवर्त्यत्वाभावा दनिवर्तकं ज्ञानं नाऽवान् फलमिति न तदर्थं शास्त्र मारम्भणीयम्, परमप्रयोजनञ्च नसिध्य ज्ञातृज्ञेयभेदस्य सत्यस्य निवृत्ते रसम्भावितत्वात् ॥

किञ्च, शास्त्रश्रवणाधिकारो ज्ञप्तिमात्रस्यवा ? ज्ञातुर्वा ? प्रथमः, ज्ञप्तिमात्रस्य श्रोतृत्वायोगात् । नद्वितीयः, ज्ञातुः स्वनाशस्य पुरुषार्थत्वेन श्रवणादौ प्रवृत्त्यनुपपत्तेः, एवञ्च विषयप्रयोजनाभा च्छास्त्रस्याऽनारम्भणीयत्व म्परेषा म्पक्षे स्थिरम् ॥

किञ्च, तत्पक्षे प्रथमसूत्रं नसङ्गच्छते, तै र्जीवब्रह्मणो रैक्य शास्त्रविषयतया अङ्गीकृतत्वेन ब्रह्मजिज्ञासापदस्याऽसङ्गतत्वात् । ब्रह्म जिज्ञास्यत्वंहि शब्दा दवगम्यते न जीवब्रह्मणो रैक्यस्य, यथा धर्मजि सापदं धर्ममात्रस्य जिज्ञास्यतां वक्ति, नतुधर्माधर्मयो रैक्यस्य जि स्यत्वम् । तद्वदेवहि ब्रह्मजिज्ञासापदम् ॥

अपिच, जगत्कारणत्वलक्षणविशेषो लक्ष्यस्य निर्विशेषत्वविरोधी सार्वज्ञ्यादिगुणाक्षेपकत्वा त्तस्य, आक्षिप्तमपि सार्वज्ञ्यादिकम् वस्तु मात्रोपलक्षण मितिचे न्न, सार्वज्ञ्येन वस्तु न्युपलक्षितेसति सर्वशक्तित्वा द्युपलक्षणान्तरवैयर्थ्यात्, नहि शाखया चंद्रे उपलक्षिते प्रासादाग्रेण प्रयोजनम् । सार्वज्ञ्येन निर्विशेषवस्तूपलक्षणं व्याहतंच, स्वेन सवि शेषस्याश्रयस्य निर्विशेषत्वज्ञापनायोगात् । सर्वशक्तित्वादिविशेषान्तर राहित्यज्ञापनासामर्थ्याच्च । अतो लक्षणसूत्रं द्वितीयं निर्विशेषपक्ष विरुद्धम् ॥

तृतीयं सूत्रमपि नघटते निर्विशेषवस्तुनि तात्पर्यविषयेसति कारणत्वाक्षिप्तसार्वज्ञ्यादिसमर्थनं क्वोपयुज्यते? सर्वज्ञत्वसमर्थनएवहि तत्सूत्रस्य प्रवृत्तिः, प्रसङ्गादपि नतत्समर्थनं न्याय्यम्, निर्विशेषत्व विरोधात् ॥

चतुर्थेच सूत्रे वेदान्तवाक्यानां भ्रमनिवर्तकवाक्यार्थज्ञानजनक तया प्रयोजनपर्यवसायित्व मुक्तम्, न तद्युक्तम्, वाक्यार्थज्ञानमात्रेण बंधनिवृत्तेः शास्त्रप्रत्यक्षविरोधप्रध्वस्तत्वात् ॥

किञ्च, कस्य भ्रमनिवृत्तिः किं ज्ञप्तेः उत चेतनस्य? नतावत् ज्ञप्तेः तस्या अचेतनत्वेन भ्रमाश्रयत्वाभावात्, चेतनोहि भ्रान्त्याश्रयः। चेतनस्य भ्रमनिवृत्तिरपि तत्पक्षे नपुरुषार्थस्स्यात्। ज्ञातुरपि निवर्त्यकोटि निविष्टत्वात् तंप्रति स्वनाशस्याऽपुरुषार्थत्वाच्च । राज्ञ श्शत्रुनिवृत्तिरिव ज्ञानरूपस्यात्मनो । ज्ञातृनिवृत्तिः पुरुषार्थ इतिचेन्न, ज्ञातु रेवात्मत्वात्, ज्ञातृधर्मतया अवगतस्य ज्ञानस्य इच्छाद्वेषादेरि वात्मत्वाभावात्, आत्म

त्वाभ्युपगमेपि तस्य पुरुषार्थार्थयितृत्वाभावेन पुरुषार्थप्रतिसम्बन्धित्वा पपत्त्या ज्ञानम्प्रति ज्ञातृनिवृत्तेः पुरुषार्थत्वायोगात्। पुरुषे णार्थनी स्यहि पुरुषार्थत्वम्। ज्ञानस्यात्मत्वपुरुषार्थप्रतिसम्बन्धित्वाभ्युपगमेपि त पेक्षज्ञातृनिवृत्तेः पुरुषार्थत्व मयुक्तम्। ज्ञानम्प्रति ज्ञातुः दुःखतद्धे ष्वन्यतमत्वाभावात्, सुखदुःखभोक्तारं प्रति सुखतद्धेतूनां दुःखतद्धे निवृत्तेरपिहि पुरुषार्थत्वम्, नहिज्ञाता ज्ञप्ते र्दुःखरूपः, नचदुःखजनयिता ज्ञानस्य दुःखानुभवितृत्वायोगात्, प्रवृत्तिनिवृत्तिपरत्वेन प्रयोजनपर्य सानं त्वयैवापास्तं ध्याननियोगवादप्रतिक्षेपे, अतोऽनुपपन्नम् शास्त्र त्वदुक्तं प्रयोजनपर्यवसायित्व मित्यादिना प्राग्भि रुक्तं मनसि निधा शास्त्रारम्भार्थसूत्राण्यपि तवहि मते नैव तात्पर्यवन्ती त्युक्तम्॥

तथा, विमते शास्त्रारम्भासम्भवसाधकं हेत्वन्तर माह प्रत्य मित्यादिना॥

अथ यदि ब्रह्मणो वेद्यत्व मङ्गीकृत्य शास्त्रस्य सविषयत्वं सिसा यिषसि? तर्हि प्रत्यक्षस्य सन्मात्रग्राहित्व मभ्युपगच्छत स्तव शास्त्र नर्थक्यं तदवस्थमेव, अप्राप्तेहि शास्त्र मर्थवत्। अतश्च परमते शास्त्र रम्भो नसिध्यतीति सुष्ठूक्तम्॥

## अध्यासानुपपत्तिः

अत्र॥ ननु परमते शास्त्रारम्भ स्सुसिद्धः जीवब्रह्मैक्यरूपविष प्रयोजनविरोधिनः कर्तृत्वादिबन्धस्याऽध्यासात्मकत्वोपपादनेन तस्य स र्थितत्वा दित्याशंक्य य द्यध्यासः प्रामाणिकोऽभविष्य त्तर्हि शास्त्र रम्भोसेत्स्य द्विमर्शे सएव नसिध्यती त्याह॥ यथा—

मू ॥ शास्त्रारम्भार्थसिध्यै यमिह सुदृढ मालम्बसेऽध्यासवादं
तं वक्तुं सूत्रकर्तुः कथमिव समभू च्छब्ददारिद्र्य मादौ ।
निर्मूलोऽसङ्गतो न स्थिति मुपलभते बालवेतालकल्प
स्तन्मूलोऽद्वैतवादः कथमिव लभतां विदुलोके प्रतिष्ठाम् ॥ ३ ॥

शास्त्रेति ॥ शास्त्रारम्भप्रयोजकविषयप्रयोजनसाधकोऽध्यासो निर्मूलः, अप्रमितत्वात् । ननु शास्त्रकृत्सम्मतएवेति प्रमितएवे त्याशंक्य तं वक्तु मित्याह ॥

अय म त्ताशयः, यद्ययं सूत्रकृदभिमतोऽभविष्य त्तर्हि सूत्र निबद्धोऽभविष्यत्, तस्य सूत्रकृदभिमतत्वे सूत्रानिबन्धने शब्ददुर्भिक्ष योगा दन्यो नोपलभ्यते हेतुः, अपरञ्चात्र महच्चित्रम् । यत्प्रथमचुम्बन एव दन्तभङ्गइव प्रबन्धु रादावेव समुपनत श्शब्ददारिद्र्ययोगइति ॥

तस्य सूत्रकृदनुक्ततामात्रेण कथ मनुपादेयते त्याशंक्याह, असङ्गतात्मेति । तेजस्तिमिरयोरिव विरुद्धात्मनो रात्मानात्मनो रितरेत राध्यासस्य सुतरा मसम्भावितत्वा दित्यर्थः ॥

अव ॥ अथाऽनुभवसिद्धत्वेनोपपन्नत्वादित्याशंक्याह ॥

मू ॥ सिद्धान्तागारधृत्यै ध्रुवमिह भवता मूलवन्धीकृतो यः
तां ब्रूपे ख ल्वविद्यां कथमिव लभतां सास्थितिं ज्ञानपूर्णे ।
ता मन्त्रब्र ण्यङ्गचकार्षी स्थयदि नितरा मात्मलब्धस्वरूपां
शास्त्राच्छेदः प्रसिद्ध्ये त्कथमपिहि भवे न्न त्वदीयेष्टसिद्धिः ॥

सिद्धान्तेति ॥ अत्रेदं हृदयम्, परसमयसौधमूलबन्धीभूतोऽ ध्यास स्सुतरा मनुपपन्नः । तथाहि, परे, तमेवं लक्षण मध्यास म्पण्डिता

अविद्येति मन्यन्तइति त मविद्यामेव भापन्ते। यद्येवं तर्हि सा किमा श्रित्य भ्रमं जनयति? नताव जीवमाश्रित्य अविद्यापरिकल्पितत्वा जीव भावस्य। अथ ब्रह्माश्रित्यै वेतिचेत् तर्हि सा ज्ञानपूर्णे ब्रह्मणि तम स्तेज सीव स्थितिं कथं लभताम्। नच, सा ज्ञानाविरोधिनी तस्या ज्ञानवाध्य त्वेन परैरेवाऽभ्युपगतत्वात्॥

ज्ञानबाध्या अविद्या ब्रह्मणि ज्ञानपूर्णेऽधितिष्ठतीति कथं नोप हास्य मिदम्। अत्राहु रभियुक्ताः 'ज्ञानरूप म्परम्ब्रह्म तन्निवर्त्यं म्मृपा त्मकम्। अज्ञानञ्चे त्तिरस्कुर्या त्कः प्रभु स्तन्निवर्तन, इति। शुक्त्याद यस्तु स्वयाथात्म्यप्रकाशे स्वय मसमर्था स्वाज्ञानाविरोधिन स्तत स्तन्नि वर्तने ज्ञानान्तर मपेक्षन्ते। ब्रह्मतु स्वानुभवसिद्धस्वयाथात्म्यमिति स्वाज्ञान विरोध्येव। ततएव निवर्तकान्तरं नापेक्षते, अतो ज्ञानस्वरूपस्य ब्रह्मणो विरोधादेव नाज्ञानाश्रयत्वम्॥

किञ्च, अविद्यया प्रकाशैकस्वरूपं ब्रह्म तिरोहितमितिवदता स्वरूपनाशएव वोक्त स्यात्, प्रकाशोत्पत्तिप्रतिवन्धो विद्यमानस्य विना शोवा प्रकाशस्याऽनुत्पाद्यत्वाभ्युपगमेन प्रकाशतिरोधानं प्रकाशनाशएव॥

अपिच-निर्विपया निराश्रया स्वप्रकाशेय मनुभूति स्वाश्रयदोप वशा दनन्ताश्रय मनन्तविपय मात्मान मनुभवती त्यत्र किमयं स्वाश्रय दोपः परमार्थभूतः उताऽपरमार्थभूत इति विवेचनीयम्॥

नताव त्परमार्थभूतोऽनभ्युपगमात्, ना प्यपरमार्थः, अनभ्युप गमात्, द्रष्टृदृश्ययो स्तदवच्छिन्नाया दृशेश्च काल्पनिकत्वेन मूलदो पान्तरापेक्षया अनवस्थास्यात्। अथैतत्परिजिहीर्पया परमार्थसत्यब्रह्म

रूपो दोष इतिचेत्, यदि ब्रह्मैव दोषः प्रपञ्चदर्शनस्य तन्मूलं स्यात्, किं मविद्यान्तरपरिकल्पनेन? ब्रह्मणो दोषत्वेसति तस्य नित्यत्वेन अनिर्मोक्षः स्यात्, अतो यावद्ब्रह्मव्यतिरिक्तपारमार्थिकदोषानभ्युपगमः, नताव द्भ्रान्ति रुपपद्येत ॥

किञ्च, अविद्या किंरूपा, सासती उताऽसती, अनिर्वचनीयेतिचे दनिर्वचनीयत्वञ्च किमभिप्रेतम् । सदसद्विलक्षणत्व मितिचे त्तथाविधस्य वस्तुनः प्रमाणशून्यत्वेनाऽनिर्वचनीयतैव स्यात् ॥

नित्यमुक्तस्वप्रकाशचैतन्यैकस्वरूपस्य ब्रह्मणोऽज्ञानानुभवश्च नस म्भवति स्वानुभवस्वरूपत्वात्, स्वानुभवस्वरूपमपि तिरोहितस्वरूप मज्ञान मनुभवतीतिचेत्, किमिद न्तिरोहितस्वरूपत्व मप्रकाशितस्वरूपत्व मिति चेत्, स्वानुभवस्वरूपस्य कथ मप्रकाशितस्वरूपत्वम्? स्वानुभवस्वरू पस्या प्यन्यतोऽप्रकाशितस्वरूपत्व मुपपद्यत इतिचेत्? एवं तर्हि प्रका शाख्यधर्माभ्युपगमेन प्रकाशस्यैव स्वरूपत्वात् तस्याऽन्यतस्स्वरूपनाशए वाऽभ्युपगत स्स्यात् ॥

किञ्च, अविद्यया ब्रह्मणि तिरोहिते तद्ब्रह्म नकिञ्चि त्प्रकाशते? उत किञ्चि त्प्रकाशते? पूर्वस्मि न्कल्पे प्रकाशमात्रस्वरूपस्य ब्रह्मणोऽ प्रकाशे तुच्छतापत्तिः ॥

उत्तरस्मि न्कल्पे सच्चिदानन्दैकरसे ब्रह्मणि कोऽयमंश स्तिरस्क्रियते? कोवा प्रकाशते? निरंशे निर्विशेषे प्रकाशमात्रवस्तु न्याकार द्वयासम्भवेन तिरस्कारः प्रकाशश्च युगप न्नसम्भवेते, अस्याऽज्ञान स्याश्रयानिरूपणादेवाऽसम्भाव्यता दुर्वारा ॥

अपिच अपरमार्थदोषमूलभ्रमवादिना निरधिष्ठानभ्रमासम्भवोऽपि दुरुपपादः, भ्रमहेतुभूतदोषदोषाश्रयवदधिष्ठानापारमार्थ्येऽपि भ्रमोपपत्तेः ॥

ततश्च सर्वशून्यत्वमेव स्यात् ॥

यत्पुन स्सदसदनिर्वचनीय मज्ञानं श्रुतिसिद्धमिति तदसत् । अनृतेनहि प्रत्यूढा इत्यादि ष्वनृतपदस्याऽनिर्वचनीयानभिधायित्वात् । ऋतेतरविषयो ह्यनृतशब्दः, ऋतमिति कर्मवाची ऋत म्पिबन्ता विति वचनात् । ऋतं कर्मफलाभिसन्धिरहित म्परमेश्वराराधनरूप न्तत्प्राप्ति फलम्, अत्र तद्व्यतिरिक्तं सांसारिकफलं कर्मानृतं ब्रह्मप्राप्तिविरोधि, एतं ब्रह्मलोकं नविन्दन्ति, अनृतेनहि प्रत्यूढाइति वचनात्, नासदासी न्नोसदासीदित्यत्रापि सदसच्छब्दौ चिदचिद्व्यष्टिविषयौ, उत्पत्तिवेळायां सत्त्यच्छब्दाभिहितयो श्चिदचिद्व्यष्टिभूतयो रप्ययकाले अचित्समष्टि भूते तमश्शब्दाभिधेये वस्तुनि प्रळयप्रतिपादनपरत्वा दस्य वाक्यस्य नात्र कस्यचि दनिर्वचनीय तोच्यते । सदसतोः कालविशेषे असद्भाव मात्रवचनात् । अत्र तमश्शब्दाभिहितस्य अचित्समष्टित्वं श्रुत्यन्तरादव गम्यते । तथाच, अव्यक्त मक्षरे लीयते, अक्षर न्तमसि लीयते इति श्रुतौ तमश्शब्देनाऽचित्समष्टिरूपायाः प्रकृते स्सूक्ष्माव स्थोच्यते । तस्यास्तु, श्रु ॥ मायान्तु प्रकृतिं विद्या न्मायिनन्तु महेश्वरमिति माया शब्देनाऽभिधाना दनिर्वचनीयत्व मितिचे न्नैतदेवम् । मायाशब्द स्यानिर्वचनीयवचनत्वाभावात् । ननु, मायाशब्दस्य मिथ्यापर्यायत्वेनाऽ निर्वचनीयत्व मितिचे त्तदपि नास्ति, तस्य विचित्रार्थसर्गकराभिधायि त्वात् । प्रकृतेश्च विचित्रार्थसर्गकरत्वादेव मायाशब्दाभिधेयत्वम्,

श्रु ॥ अस्मा न्मायी सृजते विश्व मेत त्तस्मिं श्चान्यो मायया सन्नि रुद्धइति मायाशब्दवाच्यायाः प्रकृते र्विचित्रार्थसर्गकरत्वं दर्शयति। परमेश्वरस्य तद्वत्तामात्रेण मायित्व मुच्यते, नाऽज्ञत्वेन। जीवस्यैवहि मायया निरोध श्श्रूयते। श्रु ॥ तस्मिं श्चान्यो मायया सन्निरुद्धइति। अनादिमाययासुप्तो यदा जीवः प्रबुध्यते, इतिच, इन्द्रो मायाभिः पुरु रूप ईयत इत्यत्रापि विचित्रा श्शक्तयोभिधीयन्ते। मम माया दुरत्यया इत्यत्रापि गुणमयीतिवचना त्सैव त्रिगुणात्मिका प्रकृति रुच्यतइति नश्रुतिभि स्सदसदनिर्वचनीयाज्ञानप्रतिपादनम्। ना प्यैक्योपदेशानु पपत्त्या, नहि तत्त्वमसीति जीवपरयो रैक्योपदेशेन सर्वज्ञे सत्यसङ्कल्पे सकलजगत्सर्गस्थितिनाशहेतुभूते तच्छब्दावगते परे ब्रह्मणि विरुद्धाज्ञान परिकल्पनाहेतुभूता काचिद प्यनुपपत्ति र्दृश्यते, ऐक्योपदेशस्तु त्वंशब्दे नापि जीवशरीरकस्य ब्रह्मणएवाऽभिधाना दुपपन्नतरः, अतो नब्रह्माज्ञान परिकल्पनम्। स्वप्रकाशे कुतोऽविद्या तां विना कथ मावृतिः, इत्यादि तर्कजालानि स्वानुभूति र्ग्रसत्यसा वित्युक्तेः, अह मज्ञइ त्यनुभवेन सिद्धाया अविद्यायाः प्रमाणान्तरानपेक्षत्वा त्तत्सिद्धि रुपपन्ने वेतिचेन्न सार मेतत्, तादृशाज्ञानस्य किञ्चिज्ज्ञे जीवे निर्बाधत्वेन-ज्ञाज्ञाविति श्रुति सिद्धत्वेनच तदनुभवसिद्धाज्ञानस्य ब्रह्म ण्यज्ञानकल्पकत्वायोगात् ॥

किञ्च, भेदव्यवहारस्या प्यनुभवसिद्धत्वेन तदभ्युपगमे सर्व प्रामाण्याकुलीकरणाभावलाभाच्च। अपिच, भवदभ्युपगताज्ञानानु भवस्यैव जीवे ब्रह्मेतरत्वसाधकत्वा त्तस्य ब्रह्म ण्यज्ञानकल्पकत्वासिद्धेः। एव मनुपपन्नाम प्यविद्यां ब्रह्म ण्यङ्गीकरोपि चेन्न तदापि तवेष्टिलाभः

किन्तु ब्रह्मणएव तुच्छतापत्त्या तज्जिज्ञासारूपशास्त्र स्योच्छेदएव साधित स्स्यादिति सुष्ठूक्तम् ॥

वस्तुत आचार्यस्य मतेऽध्यासो न सिध्यति । तथाहि अन्यत्राऽन्यधर्मानुसन्धानरूपो ह्यध्यासो निर्विकारस्य पुरुषस्य नसम्भवति अचेतनायाः प्रकृते श्चाऽनुसन्धानरूपो न सम्भवत्येवेति, सू ॥ स्वपक्ष दोषाच्चेति सूत्रे प्रधानकारणवादपक्षे प्रकृतिपुरुषयो रेवाऽन्योन्याध्या सस्य निराकृतत्वेन तद्रीत्या सत्यानृतयो रात्मानात्मनो रध्यासस्य सुतरा मसम्भवात् । तस्मा त्परै रध्यासवादः कापिलादेवतन्त्रा त्परिगृहीतः कापिलं दर्शनं निराकुर्वता सूत्रकृता निराकृतश्चेति सिद्धम् । एवञ्च परपरिगृहीतोऽध्यासवादो नकेवल माचार्येण परिगृहीतः प्रत्युत निरा कृतश्चेति पूतिकूश्माण्डीकृतोऽध्यासः, यद्यपि स्वपक्षदोषाच्चेति सूत्र मन्यथैव व्याख्यात म्परैः । तथापि, आचार्यमतं निराचिकीर्षुभिरेव श्रीक ण्ठीयं दृष्टवद्भिरपि तै स्त दन्यथा नीत मिति नैतावताऽध्यास आचा र्यस्य सम्मति स्सिध्यतीति दिक् ॥

अव ॥ ननु, जीवब्रह्मैक्यस्य शास्त्रतात्पर्यविषयत्वेन बन्धस्य सत्यत्वे बद्धाबद्धयो र्जीवब्रह्मणो रैक्य स्याऽनुपपत्ते स्तदन्यथानुपपत्त्या शास्त्रेण बन्ध स्याध्यासतैव सूचिते त्याशंक्य, यदि जीवब्रह्मणो रैक्यस्य शास्त्रविषयत्वं विद्येत तर्हेतदेवं स्यात् । वस्तुत स्तदेव नास्ती त्याह ॥

## जीवब्रह्मैक्यानुपपत्तिः

मू ॥ जीवब्रह्मैक्य मस्य ध्रुव मिह विषय म्मन्यसेऽर्थं ह्यभीष्टं
तत्सूत्रे कुत्र विद्व न्कथय निगदितं लक्षितं व्यञ्जितंवा ।

तत्प्रत्याख्यात मासी त्परमधिकरणै र्निश्चितार्थै रनेकै
श्शास्त्रार्थप्रत्यनीकः कथ मिह विषय श्चार्थइ त्यभ्युपेयः ॥ ४ ॥

जीवेति, इद मिह सम्प्रधार्यम्, परे जीवब्रह्मैक्यं शास्त्रस्य विषय म्प्रयोजनञ्च मन्वते ॥

तथाच, श्रु ॥ अय मात्मा ब्रह्म, प्रज्ञान म्ब्रह्म, तत्वमसि, अहम्ब्रह्मास्मीति महावाक्यानि जीवब्रह्मणो रैक्य मात्यन्तिकं ब्रुवते ! तदेवच विषयो भवति शास्त्रस्य, तत्वञ्च सुनिरूपितं समन्वयाधिकरणे, अन्यथा सिंहोमाणवक इत्यादीनीव महावाक्यानि गौणार्थकानि भवे युरिति । इद न्ताव त्सूत्रजातपूर्वापरपरामर्श माचरितवताम् हृदयस्य नसम्मत म्भवति । तथाहि, शास्त्रमुखे ब्रह्मजिज्ञासेत्येव प्रतिज्ञा कृता नतु जीवब्रह्मैक्यजिज्ञासेति ॥

किञ्च, न कस्मिन्न प्यधिकरणे भेद मपनुद्य सिद्धान्तितोऽ भेदो जीवपरयोः । प्रत्युत भेदएव संसूचितो बहुष्वधिकरणेषु । तथाहि, अन्त स्तद्धर्मोपदेशादि त्यधिकरणे परैरेव विवृतं यथा, इद माम्नायते, श्रु ॥ अथ यएषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यतइत्यादि, अत्र संशयः, किं विद्याकर्मातिशयवशा त्प्राप्तोत्कर्षः कश्चि त्संसारी सूर्य मण्डले चक्षुषि चोपास्यत्वेन श्रूयते ? किंवा नित्यसिद्धः परमेश्वरइति संशयं निरूप्य, किंताव त्प्राप्तम् संसारीति कुतः रूप वत्त्वश्रवणादि त्यादिना तस्मा न्नाक्ष्यादित्ययो रन्तः परमेश्वरइति प्राप्ते ब्रूमः । सू ॥ अन्तस्तद्धर्मोपदेशात्, यएषोऽन्तरादित्ये, यएषोऽन्तरक्षिणि, इतिच श्रूयमाणः पुरुषः परमेश्वरएव, नसंसारी, कुतः तद्धर्मोपदेशात्

तस्यहि परमेश्वरस्य धर्मा इहोपदिष्टा इत्यादिना सिद्धान्तितम् । एतच्च जीवपरयो र्वस्तुकृतं भेद मन्तरा नोपपद्यते ॥

किञ्च, सर्वत्र प्रसिद्धोपदेशादि त्यधिकरणे परै रेवं व्याख्यातम् । इद माम्नायते, सर्वं खल्विदं ब्रह्म, तज्जलानिति शान्तउपासीत मनोमयः प्राणशरीरो भारूपइत्यादि । तत्र संशयः, कि मिह मनोमयत्वादिभि र्धर्मै श्शारीर आत्मा उपास्यत्वे नोपदिश्यते ? आहोस्वि त्परम्ब्रह्मेति, किंताव त्प्राप्तम् । शारीरइति, कुतः तस्यहि कार्यकरणाधिपतेः प्रसिद्धो मनआदिभि स्सम्बन्धो नपरस्य ब्रह्मण इत्याद्युक्त्वा तस्मान्मनोमयत्वादिभि र्धर्मै र्जीवए वोपास्यइति प्राप्ते ब्रूमः—परमेव ब्रह्म मनोमयत्वादिभि र्धर्मै रुपास्यं सर्वत्र प्रसिद्धोपदेशादिति । अत्रापि जीवपरयो र्भेदाभ्युपगम मन्तरा नसंशयाद्यधिकरणाङ्गा न्युपपद्यन्ते ॥

अपिच, अत्ता चराचरग्रहणादित्यधिकरणे परै रेवं विवृतम्, कठवल्लीपु पठ्यते—यस्य ब्रह्मच क्षत्र ञ्चोभे भवत ओदनः, मृत्यु र्यस्योपसेचनम्, क इत्था वेद यत्र सइति, अत्र कश्चि दोदनोपसेचितोऽत्ता प्रतीयते, तत्र कि मग्नि रत्ता स्यात्, उत जीवः, अथवा परमात्मेति संशयः, विशेषानवधारणात् त्रयाणा ञ्चाग्निजीवपरमात्मना मस्मि न्ग्रन्थे प्रश्नोपन्यासोपलब्धे रित्यारभ्य, नपरमात्मा, अनश्न न्नन्योऽभिचाकशीतीति दर्शना दित्येवं प्राप्ते ब्रूमः—अत्ताऽत्र परमात्माभवितु मर्हति कुतःचराचरग्रहणात् इतिसिद्धान्तितम् । एतदपि जीवपरमात्मनो र्भेदोपलब्धि मन्तरा नघटते ॥

तथा-गुहाप्रविष्टाधिकरणेऽपि किमिह बुद्धिजीवौ निर्दिष्टा वृत जीवपरमात्माना विति संशय्य बुद्धिजीवा वेवेति पूर्वपक्षं कृत्वा जीवपर मात्माना वेवेति सिद्धान्तितम्। इदमपि जीवपरयो र्नैवस्तुकृतं वैल क्षण्य मन्तरा सङ्गच्छते॥

तथा-आन्तर उपपत्तेरि त्यधिकरणेऽपि किं मय म्प्रतिबिम्बा क्ष्यधिकरणो निर्दिश्यते? अथवा विज्ञानात्मा? उत देवतात्मा? अथ वेश्वरइति संशयं प्रदर्श्य, छायात्मेत्यादिना पूर्वपक्षञ्च निरूप्य, अत्र ब्रूम इत्युक्त्वा, परमेश्वरएवाऽक्षि ण्यभ्यन्तरः पुरुष इहोपदिष्टः, कस्मा दुपपत्ते रित्यादिना यत्सिद्धान्तित न्तदपि जीवपरयो र्भेदाङ्गीकार मन्तरा नोपपद्यते॥

एव मन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशादि त्यधिकरणेऽपि यइमञ्च लोकमित्यादिविषयवाक्येन कश्चि दन्तरवस्थितो यमयिताऽ न्तर्यामी श्रूयते, किं मधिदैवाद्यभिमानी देवतात्मा कश्चि त्किंवा प्राप्ताणिमाद्यैश्वर्यः कश्चि द्योगी? किंवा परमात्मा इत्यादिना संशय्य परमेश्वरएवेति सिद्धान्तित म्भरैः, तदपि जीवब्रह्मैक्याङ्गीकारे नयुज्यते॥

परञ्च, अदृश्यत्वादिगुणको धर्मोक्तेरि त्यधिकरणेऽपि किमय मद्रेश्यत्वादिगुणको भूतयोनिः प्रधानं स्या दुत शारीर आहोस्वि त्पर मेश्वरइति संशयं निरूप्य परमेश्वरएवे त्यवधारित म्भरैः। एतदपि जीवपरभेदानभ्युपगमे नसङ्गच्छते, एवं समन्वयाध्याये सर्वेष्व प्यधिकर णेषु तत्तद्विषयवाक्यप्रतिपाद्यो जीव ईशोवेति संशय्य परमेश्वरएवेति सिद्धान्तयन् जीवं कण्ठरवेण प्रतिषेधयामास भगवा न्सूत्रकृत्॥

तथा, आनन्दमयाधिकरणं, नेतरोऽनुपपत्तेः, इत आनन्दमयः परएवात्मा, नेतरः। इतर ईश्वरा दन्य स्संसारी जीवइ त्यर्थः, नजीव आनन्दमयशब्दे नाऽभिधीयते। कस्मा दनुपपत्तेरि त्यादिना विवृत म्परैरेव ॥

तथा—अन्तराधिकरणे, भेदव्यपदेशाच्चान्यइति सूत्र मेवं विवृत म्परैः। अस्तिचादित्यादिशरीराभिमानिभ्यो जीवेभ्योऽन्य ईश्वरोऽन्तर्यामीति ॥

अन्यच्च, सर्वत्र प्रसिद्धोपदेशादित्यधिकरणे, अनुपपत्तेस्तु नशारीरइति सूत्र स्येदंपरेषां विवरणम्—पूर्वेण सूत्रेण ब्रह्मणि विवक्षितानां गुणाना मुपपत्ति रुक्ता, अनेनतु शारीरे तेषा मनुपपत्ति रुच्यते। तुशब्दोवधारणार्थः, ब्रह्मै वोक्तेन न्यायेन मनोमयत्वादिगुणम्। नतु शारीरो जीवो मनोमयत्वादिगुणइति ॥

इदञ्च, द्युभ्वाद्यायतनाधिकरणे, भेदव्यपदेशादिति सूत्रविवरणं भेदव्यपदेशाच्चेह भवति, श्रु॥ तमे वैक जानथ आत्मान मन्यावाचं विमुञ्चतेति ज्ञातृज्ञेयभावेन। तत्र प्राणभृ त्ताव न्मुमुक्षुत्वात् ज्ञाता, परिशेषा दात्मशब्दवाच्य म्ब्रह्म ज्ञेयं द्युभ्वाद्यायतनमिति गम्यते नप्राणभृ दिति ॥

परञ्च, सुषुप्त्युत्क्रान्त्यो र्भेदेनेत्यधिकरणेपि जीवब्रह्मणो र्भेदः कण्ठरवेणै वोक्तः ॥

अपरञ्च, दहराधिकरणे इतरपरामर्शा त्सइतिचे न्नासम्भवादिति सूत्रे, असम्भवा द्दहरशब्दितो जीवो नसम्भवतीति परैरेव निगदितम् ॥

एवम्, मुक्तोपसृप्यव्यपदेशात्, तन्निष्ठस्य मोक्षोपदेशात्, आमनन्तिचैन मस्मिन्, अस्मि न्नस्यच तद्योगं शास्ति, अधिकन्तु भेद निर्देशादित्यादीन्यपि सूत्राणि जीवपरयो रात्यन्तिकमेव भेद म्प्रतिपादयन्ति ॥

एवम्, समन्वयाध्याये, बहु ष्वधिकरणेषु जीवपरयो र्भेदस्यैव कण्ठरवेण प्रतिपादितत्वात्। जीवब्रह्मैक्य स्यैकस्मिन्न प्यधिकरणेऽसूचितत्वाच्च, जीवब्रह्मैक्यं शास्त्रतात्पर्यविरुद्धमि त्यवगमेन तदेव शास्त्रस्य विषयइत्युक्ति रसम्भावितेति व्यज्यते। यद्यपि परैः, भेदव्यपदेशाच्चेति सूत्रविवरणे, यथा मायावि न श्चर्मखड्गधरा त्सूत्रे णाकाश मधिरोहत स्सएव मायावी परमार्थरूपो भूमिष्ठोऽन्यः, यथावा घटाकाशा दुपाधिपरिच्छिन्ना दनुपाधिपरिच्छिन्न आकाशोन्यः। ईदृशञ्च विज्ञानात्मपरमात्मभेद माश्रित्य नेतरोनुपपत्तेः, भेदव्यपदेशाच्च इत्युक्त मिति भाषितम् ॥

तथा—अन्तर्याम्यधिकरणे, शारीर श्चोभयेपिहि भेदेनैव मधीयते इति सूत्रव्याख्यानावसरे, अविद्याप्रत्युपस्थापितकार्यकरणोपाधिनिमित्तोऽयं शारीरान्तर्यामिणो र्भेदव्यपदेशो न पारमार्थिकः। एकोहि प्रत्यगात्मा भवति नद्वौ प्रत्यगात्मानौ सम्भवतः, एकस्यैवतु भेदव्यवहार उपाधिकृतः, यथा घटाकाशो महाकाशइति, ततश्च ज्ञातृज्ञेयादिभेदश्रुतयः प्रत्यक्षादीनिच प्रमाणानि, संसारानुभवो विधिप्रतिषेधशास्त्रञ्चेति सर्व मेत दुपपद्यतइतिच निगदितम्। तथापि, एतत्सर्वं सूत्रजातनिरा

कृतनिजमतप्रतिष्ठापनार्थमुधायासविलसितमेव । शब्दप्रमाणविरुद्ध स्योप मानप्रमित स्याप्यर्थस्याऽनुपादेयत्वात् ॥

तथाच, यदि जीवब्रह्मभेदोऽपारमार्थिकोऽभविष्य तर्हि तत्व तत्वं सूत्रकृत् स्पष्ट मवेदयिष्यत् । परमाप्तो भगवान् शास्त्रकृ त्स्व सम्मतं जीवब्रह्मैक्यं हृदि सङ्गोप्य स्वानभिमतभेदप्रतिपादकं सूत्रजातं बहिः प्रकटयामासेति नयुज्यते विश्वसितुम् । नशास्त्रकृता प्रतारकेण भाव्यम्, यद्यय मभिमत मभेद मन्तस्संगोप्यऽनभिमतं भेदमेव बहि रवेदयिष्यत् तर्हि विशदं धूर्ताचार्यपीठ मध्यरोक्ष्यत् ॥

ननु, अतए वोपमा सूर्यकादिव दित्यत्र भेद स्यौपाधिकत्वं कचि त्सूत्रित मिति चेन्न, तत्रहि जीवपरभेद स्यौपाधिकत्वं नसूच्यते, किन्तर्हि ब्रह्मणएव, अणो रणीया न्महतो महीया नित्यादिना अणुत्व महत्वादिना प्रतीतेः किन्त दुभय मस्तीतिशङ्कायाम् । नस्थानतोपि पर स्योभयलिङ्गं सर्वत्रहीति, एकत्वाद्ब्रह्मण स्तस्मि न्विरुद्धरूपद्वयं नसम्भ वती त्युक्त्वा क्षेत्राणां भिन्नपरिमाणत्वा दन्तरनुप्रविष्टस्यापि परमात्मनो भिन्नपरिमाणत्वप्रतिभासे दृष्टान्त उपादीयते, सूर्यकादिव दित्यत्रैव जल सूर्ययो मूर्तद्रव्यत्वा द्रूपवत्वाच्च तत्र प्रतिबिम्ब स्सम्भवति, ब्रह्मण स्त्वम ूर्तत्वा दरूपवत्वाच्च तत्र प्रतिबिम्बानुपपत्तिरिति बिम्बपदाग्रहणात्तु नत्र थात्व मि त्यने नाशंक्य नह्यत्र बिम्बप्रतिबिम्बभावेन जीवेश्वरभेदोऽभि प्रेतः किन्तु ब्रह्मणएव क्षेत्रप्रमाणानुरूपप्रमाणप्रतिभास इत्ययमेवाऽर्थो दृष्टान्तोपादानेन विवक्षितइति, वृद्धिह्रासभाक्त्व मन्तर्भावा दुभयसाम ञ्जस्या देवमि त्यनेन स्पष्टीकृतः, तस्मा न्नास्ति भेद स्यौपाधिकत्वम् ।

अतए वैकस्मि न्नेवान्तरनुप्रविष्टयो र्जीवेश्वरयो र्भेदः प्रतिपाद्यते, गुहा म्प्रविष्टा वात्मानौहि तद्दर्शना दित्यादौ । तस्मा ज्जीवपरभेदस्य स्वाभा विकत्वा न्नास्ति जीवपरयो स्स्वरूपैक्यम्, नापि सशास्त्रविषयः ॥

किञ्च, जीवपरयो स्स्वरूपैक्यं यदि शास्त्रविषयः, तर्हि तदेव प्रत्यधिकरणं प्रतिपाद्येत नच प्रतिपाद्यते । किन्तु प्रत्यधिकरणम् तेनतेन विषयवाक्येन जीवः प्रतिपाद्यते । ईश्वरोवेति संशये जीवइति पूर्वपक्षं कृत्वा तत्तद्वाक्यप्रतिपाद्यधर्माणां जीवेऽसम्भवा त्तद्व्यतिरिक्तं ईश्वरएवेति प्रतिष्ठाप्यते नेतरोऽनुपपत्तेः, भेदव्यपदेशाच्चान्य इत्यादौ । नच जीवत्व स्यौपाधिकत्वा त्तेन स्वरूपेण प्रतिपाद्यता परं निषिध्यते नस्वरूपेणेति वाच्यम्, एव मीश्वरत्वस्या प्यौपाधिकत्वा त्तेनापि रूपेण प्रतिपाद्यता नस्यात् । स्वरूपमात्रस्यैव स्वाभाविकत्वा त्प्रतिपाद्यता स्यात्, नच तथा प्रतिपाद्यते, तत्प्रतिपादन ईश्वरस्येव जीवस्यापि तत्तद्वाक्यप्रतिपाद्यता दुर्निवारा स्यादौपाधिकत्वाविशेषात्, किन्तु जीवव्यावृत्तेन ईश्वरत्वेनैव रूपेण प्रतिपाद्यते । अन्त स्तद्धर्मोपदेशा दित्यादौ तस्मा न्न जीवब्रह्मणो स्स्वरूपैक्यम् । नस शास्त्रविषयः, ना पीदं प्रयोजनं जगद्व्यापारवर्जं प्रकरणात् । असन्निहितत्वाच्च, भोगमात्रसाम्यलिङ्गाच्चे त्यादिना मुक्ताना मीश्वरस्यच भेदस्यैव प्रतिपादनात् । तस्मा दध्यासस्य विषय प्रयोजनानुपयोगित्वा दसूत्रितत्वं सिद्धम् ॥

ननु, प्रकरणोपपदादिसङ्कोचकराहित्येन निरतिशयबृहत्त्ववाचिना ब्रह्मशब्देन ब्रह्मणः प्रत्यगभिन्नत्वेन निर्विशेषत्वेन चाऽवगमात्, चिद चिद्रूपविशेष स्याध्यास मन्तराऽनुपपन्नतया तदन्यथानुपपत्त्याऽध्यासस्सू

चितइतिन्यायरक्षामणावुक्तमितिचेन्नसार मेतत्, प्रत्यगभिन्नत्वादिरूपब्रह्म
पदार्थस्य जन्माद्यस्य यतः नेतरोऽनुपपत्तेरित्यादिसूत्रैः प्रतिपिद्धतया भवद
भ्युपगतब्रह्मपदार्थस्य शास्त्रकृतात्पर्याविपयत्वनिश्चयात् ॥

तथाहि, ब्रह्मणो निर्विशेषत्वे जन्माद्यस्ययतइति निर्धारितं जग
ज्जन्मादिकारणत्वं, प्रत्यगभिन्नत्वे नेतरोनुपपत्तेरिति निर्णीतं जीववैलक्ष
ण्यंच नाञ्जस्य मश्नुवीत । तस्मा दध्यासस्य सूत्रविरुद्धत्वं दुरपलपम् ॥

## निर्विशेषत्वानुपपत्तिः

अत्र॥ अथ पराभिमतं निर्विशेपत्वं सूत्रविरुद्धमि त्यावेद
यितु माह ॥

मू॥ आत्मानं निर्विशेपं नहि निगमशिरस्सूक्त्यो बोधयेयु
वेदान्तार्थवबोधे पर मिह यदिन स्सूत्रराशिः प्रमाणम् ।
युक्त्याभासै स्समन्ता दधिकरणगणं ये समाकर्पयेयु
स्तेखल्वावेदयेयु र्निजमतिविभवं सिद्धसाध्याः कथंस्युः ॥ ५

आत्मानमिति ॥ यदि सूत्राणि प्रमाणमूर्धन्या न्यभविष्यन् तर्हि
श्रुतिसूक्त्यो निर्विशेप मात्मानंनाऽबोधयिष्यन् । यत श्चोपक्रमादिभि
र्लिङ्गै स्सूत्राणि सगुणमेव निर्धारय न्त्यात्मानम् ॥

तथाहि, भगवान्सूत्रकारो ब्रह्मणो जिज्ञास्यत्वं प्रतिज्ञाय तस्य
जन्मा द्यस्ययतइति जगज्जन्मादिकारणत्वरूपलक्षणं प्रतिपादय न्नुपक्रम
एव परमात्मानं सगुण मावेदयामास । एव मुपसंहारेऽपि–अनावृत्ति
श्शब्दादिति सगुणमुक्तिकथनेनैव शास्त्र मुपसंहरन् सगुणमेव तत्वं
निर्धारयति, एव ञ्चोपक्रमोपसंहाराभ्यां सागुण्यमेव प्रतिपादितमिति

निर्विवादम् । तथा, सर्वधर्मोपपत्तेश्च, विवक्षितगुणोपपत्तेश्च, सुखविशिष्टाभिधानादेव, आनन्दादयः प्रधानस्य–अन्त स्तद्धर्मोपदेशात्–कम्पनात्–शब्दादेव प्रमितः, साच प्रशासनात् इत्यभ्यासेन सागुण्यं प्रतिपादितम् । एवम्, सर्वोपेताच तद्दर्शनादित्यपूर्वतयाच सर्वगुणवैशिष्ट्यमेव निरूपितम् । यद्यप्यत्र, सर्वशक्तिवैशिष्ट्यमेव प्रतिपाद्यतइति विवृतं भाष्यकृद्भिः, तथापि–तत्सागुण्यस्यैवव्यवस्थापकम् नतुनैर्गुण्यस्य निर्गुणे सर्वशक्तिमत्वायोगात् । तथा, मुक्तः प्रतिज्ञानात्–भोगमात्रसाम्यलिङ्गाच्च, इत्यादिना सगुणोपासनाफलं निरूपितम् । एवम्, सङ्कल्पादेवतु तच्छ्रुतेः, अतएवचाऽनन्याधिपतिरिति सगणोपासकस्तुतिरूपोऽर्थवादश्च निरूपितः । अथ, सर्वधर्मोपपत्ते श्चेत्यादिना उपपत्तिश्च सुनिरूपितेति षड्विधतात्पर्यलिङ्गै स्सगुणएव परमात्मेति निर्धारितो मीमांसये त्यनवद्यम् । इतश्च यद्वक्तव्यं तत्सर्वम् ब्रह्मपरिष्कारे निरूपितमिति नेह ॥

अव ॥ ननु, निर्विशेषब्रह्मपरतया कृत्स्नस्यापि शास्त्रस्य समन्वितत्वेन निर्विशेषत्वपक्षे दोषोद्घाटन मकिञ्चित्कर मित्याशंक्य यदि कृत्स्नमपि शास्त्रं निर्विशेषपरतया समन्वितं तर्हि युज्येत, तदेव नेत्याह ॥

मू ॥ प्रोक्ता या स्मृता सा सगुणविषयिणी तत्परोपासनोक्ता
सूत्रोक्ता यार्चिरादि र्गति रपरपरा तत्परै र्वेहमुक्तिः ।
तद्ब्रूहि क्वोक्त आसी द्ब्रवदभिलपितो निर्गुणैकान्तवाद
स्सिद्धान्त स्तेहि वाचा मविषय उदभू त्किन्वत श्चित्र मत्र॥ ६

प्रोक्तेति ॥ ब्रह्मणो लक्षणप्रतिपादकं जन्माद्यस्य यतइत्यधिकरणं सगुणविषयं जगज्जन्मादिकारणत्वस्य निर्गुणेऽसम्भवात् । अतएव, अस्य जगतः—जन्मस्थितिभङ्गं यतः सर्वज्ञा त्सर्वशक्तेः कारणा द्भवति तद् ब्रह्मेत्यनेन परैर पीद मधिकरणं सगुणविषय मेवेति संसूचितम् । एतेन समन्वयाख्योऽध्यायः कार्त्स्न्येन सगुणपरएवेति व्यज्यते, तत्र कारणवाक्य समन्वयस्यैव ब्रह्मणि प्रतिपादनात् । एवम्, विरोधपरिहाररूपो ऽप्यध्याय सगुणमेव परमात्मान मावेदयति तत्रा पीश्वरकारणवादविरोधस्याऽन्वादि कारणवादरूपस्य परिहृतत्वात् । एव मुपासना सगुणपरैवेति परै स्वी कृतम् । ब्रह्मापेक्षितोपाधिसम्बन्ध न्निरस्तोपाधिसम्बन्ध ञ्चोपास्यत्वे ज्ञेयत्वेन चोच्यतइ त्युक्तेः, उपास्यगुणाना मगुणेऽसम्भवे नोपासनाय स्सगुणपरत्व मवश्यत स्तै रङ्गीकृतम् । एते नोपासनाया स्तदुपयोगि गुणोपसंहारस्यच साधनाभिधाने तृतीयस्मि न्नध्याये निरूपितत्वे तस्याऽध्यायस्य कार्त्स्न्येन सगुणविषयत्व म्परै रूरीकृतमेव ॥

किञ्च, सर्ववेदान्तप्रत्ययाधिकरणे सगुणविषया प्राणादिविषया चेयं विज्ञानभेदाभेदादिचिन्ते त्यदोपइति परैरेवोक्तत्वादपि साधना ध्यायस्य सगुणपरत्व मवधार्यते । तथा, फलाख्यस्य चतुर्थस्या प्यध्या यस्य सगुणविषयत्व म्परैरेव प्रायशोऽङ्गीकृतम् । तथाच-प्रथमपादे प्रथमे आवृत्त्यधिकरणे—प्रथम न्ताव त्कतिभि श्चिदधिकरणै स्सगुणोपासना श्रयविचारशेषमेवाऽनुसराम इत्युक्त्वा, नप्रतीकेनहि सइत्यधिकरणे प्रतीकोपासनेषु संशयइति कथनेन, आसीन स्सम्भवात्, आप्रायणा दित्याद्यधिकरणानां परैरेव सगुणपरतया विवरणेन, अग्निहोत्रादि

तत्कार्यार्थैवे त्यधिकरणे-सगुणासुतु विद्यासु कर्तृत्वानतिवृत्ते स्सम्भव त्यागाम्यप्यग्निहोत्रादीति कथनेन प्रथम पादस्य सगुणपरत्व म्परसम्मत मेव। अथ द्वितीयपादे—वाङ्मनसि दर्शना दित्यधिकरणे अथाऽपरासु विद्यासु फलप्राप्तये देवयान म्पन्थान मवतारयिष्य न्प्रथम न्ताव द्यथा शास्त्र मुत्क्रान्तिक्रम मन्वाचष्टे इतिवचनेन, रश्म्यनुसारीत्यादीनां सगुणविषयत्वेन परैरेव विवृतत्वाच्च द्वितीयपादस्य सगुणपरत्वं सिद्धम्। अत्र यद्यपि प्रतिषेधादितिचेन्न शारीरादित्यादीनि द्वित्रा ण्यधिकरणानि निर्विशेषपरतया परै विंवृतानि, तथापि, तदोकोग्रज्वलनाधिकरणे, समाप्ता परविद्यागता चिन्ता सम्प्रति त्वपरविद्याविषयामेव चिन्ता मनुवर्तयतीति प्रकरणस्य सगुणचिन्तापरत्वस्य मध्ये निर्गुणचिन्तायाः प्रासङ्गिकत्वस्यच परैरेवाङ्गीकृतत्वेन निर्गुणचिन्तापरतया कृतपरकीय विवरणासाङ्गत्यस्य गतिपरिष्कारे सुनिरूपितत्वाच्च द्वितीयपादस्य सगुणैकान्तिकत्व मविचलम् ॥

एवं तृतीयपादेऽपि अर्चिरादिना तत्प्रथिते रित्यादीनां सगुण परतया परैरेव विवृतत्वेन तस्य सगुणपरत्व मवार्यम् ॥

अथ चतुर्थपादेऽपि सङ्कल्पादेवतु तच्छ्रुतेः, भोगमात्रसाम्य लिङ्गाच्च इत्यादीना म्परैरेव सगुणपरत्वाविष्करणेन, अनावृत्ति श्शब्दा दिति शास्त्रोपसंहाराधिकरणस्यापि देवयानेन पथा ये ब्रह्मलोक ङ्गच्छ न्तीति सगुणपरत्व मभ्युपगम्य, सम्यग्दर्शनविध्वस्ततमसान्तु नित्यसिद्ध निर्वाणपरायणानां सिद्धैवाऽनावृत्तिरिति स्वसमयस्य प्रतिज्ञाप्रमाणैक शरण्यत्वद्योतनेनच कृत्स्नस्याऽपि शास्त्रस्य सगुणपरत्व म्पर्यवत दवि

कम्प्यम् । यद्यपि, मुक्तः प्रतिज्ञानादिति निर्गुणपरतया विवृत म्परैः तथापि, अग्नीषोमीय म्पशु मालभेतेतिवचनस्य, छागस्यवपाया इत्यादि विशेषवचनपर्यालोचनया छागपश्वालम्भनविषयत्ववत्—मुक्तः प्रतिज्ञान दित्यधिकरणस्यापि भोगमात्र साम्यलिङ्गाच्चेति विशेषार्थपरसूत्रपर्या लोचनया सगुणमुक्तिपरत्वमेव न्याय्यम् । नतु निर्विशेषपरत्वमिति विदित मेव सुधियामिति नतत्र वक्तव्य म्बहु । एवम्, विशेषवचनाना मवश्य स्सविशेषविषयत्वमङ्गीकृत्य सामान्यवचनानां परैः स्वानुकूलतया कृतं विवरणमेव तस्याऽमूलत्वं व्यनक्ति । एतेन निर्गुणब्रह्मवाद श्शास्त्रस्याः विषयइ त्यवधारितम् । इदमपि परै रूरीकृतमेव, अनियोज्यब्रह्मावगमं श्शास्त्रस्याऽविषयत्वादिति तैरेवबहुवार मुक्तत्वात् । एवं, परै रूरीकृतस्य ब्रह्मण श्शास्त्राऽविषयत्वमेव चित्रम्-अथ तदीयस्य सिद्धान्तस्यापि शास्त्राविषयत्व म्महच्चित्रमिति किन्वत इत्यनेन सूचितम् ॥

## जगन्मिथ्यात्वानुपपत्तिः

अव॥ अथ, पराभिमतस्य जगन्मिथ्यात्वस्य सूत्रविरुद्धतां निरूपयति, यथा —

मू॥ मिथ्यात्वं यत्प्रपञ्चे तव समभिमतं सूत्रित क्कुत्र विद्वन्
तन्न्यायै स्प्रमेयैः प्रतिकथित मभू त्सर्वथाऽत्रैवशास्त्रे ।
किञ्चाऽन्यै स्मर्तृवर्यै र्बहुतरवचनै श्श्रूयते दूष्यमाणं
तद्धि प्रामाणिकाना म्परिषदि विदुषा मभ्युपेय ङ्कथं स्यात् ॥ ७

मिथ्यात्वमिति ॥ परे तावत् जगतो मिथ्यात्व मभिमन्वते तत्कुत्रा प्यधिकरणे नप्रतिपाद्यते, प्रत्युत जगतस्सत्यत्वैवप्रतिपाद्यते ।

तथाहि, ब्रह्मणो जिज्ञास्यत्व म्प्रतिज्ञाय जन्मादीतिसूत्रेण जगज्जन्मादि कारणत्व म्ब्रह्मणोऽसाधारणं लक्षण मुक्तम् । इदञ्च जगतो मिथ्यात्वे नोपपद्यते कार्यस्य मिथ्यात्वे तदाक्षिप्तस्य कारणत्वस्यापि मिथ्यात्वेन लिलक्षयिषितस्य ब्रह्मणोपि मिथ्यात्वापातात् । अत्र यदुक्त म्परैः रज्जु ज्ञानसहित रज्जूपादाना धारा रज्ज्वां सत्या मस्ति रज्ज्वामेवच लीयते, एव मविद्यासहितब्रह्मोपादान ञ्जगत् ब्रह्मण्येवाऽस्ति तत्रैवच लीयतइति सिद्धमिति तदप्ययुक्तमेव भ्रमतदधिष्ठानयोः कार्यकारणभावाऽनभ्युपग मात् । ईक्षते र्नाशब्दमि त्यचेतनस्य प्रधानस्य कारणत्वनिराकरणेन ब्रह्मणो भ्रमाधिष्ठानत्वरूपकारणत्ववारणाच्च । अन्यथा, स्थाण्वादेरपि भ्रमाधिष्ठानत्वसम्भवेनाऽचेतनस्य प्रधानस्य कारणत्वप्रतिषेधो नयुज्येत, भ्रमाधिष्ठाने चैतन्यानुपयोगात्, ईक्षणकर्तृत्वानपेक्षणाच्च ॥

किञ्च–प्रथमेऽध्याये जगत्काणत्वरूपलक्षणलक्षिते सर्वे वेदान्ता स्समन्विताः, अतएव बालाक्यधिकरणे उक्त म्परैः 'एवं ब्राह्मणपरिव्राजक न्यायेन सामान्यविशेषाभ्या ञ्जगतः कर्ता वेदितव्यतया उपदिश्यते, परमेश्वरश्च सर्वस्यजगतः कर्ता सर्ववेदान्ते ष्ववधारितइति–तथा, विरोध परिहाराख्ये द्वितीयस्मि न्नप्यध्याये अभिन्ननिमित्तोपादाने ब्रह्मणि स्मृतिन्यायविरोधः परिहृतः, अण्वादिकारणवादा न्निराकृत्य ब्रह्मकारण वादएव सिद्धान्तितः, एतच्च जगतो मिथ्यात्वे नोपपद्यते । मिथ्या भूतजगत्कारणत्वस्य ब्रह्मणि सर्वज्ञत्वसर्वशक्तित्वादिसमर्पकत्वाभावेन शास्त्रस्याऽप्रयोजनत्वात् । प्रत्युत भ्रमाधिष्ठानत्वसाधकतया ब्रह्मण स्तुच्छ तापादकत्वाच्च ॥

अपिच-आरम्भणाधिकरणे, कार्य माकाशादिक म्बहुप्रपञ्च ज्जगत्-कारण म्परम्ब्रह्म, तस्मा त्कारणा त्परमार्थतोऽनन्यत्वं व्यतिरेकेणाऽभावः कार्यस्याऽवगम्यतइति यत्परै रुक्तं तत्सूत्रविरुद्धमेव । न ह्यनन्यत्वशब्दोऽसत्ववाचो कि न्त्वभेदवाची ॥

किञ्च-कारणव्यतिरेकेण कार्यमेव नभवेत् कथ मेकविज्ञानेन सर्वविज्ञानप्रतिज्ञा समर्थ्येत । अभेदेहि कार्यकारणयोः कारणे विज्ञाते कार्यं विज्ञातमिति शक्यते वक्तुम् । विज्ञातकारणाभिन्नत्वा त्कार्यस्य असत्वे पुनः कार्यस्य कथम् कारणविज्ञानेन सर्वकार्यविज्ञानं सर्वस्यैवाऽभावात् ॥

अन्यच्च, इदं विवरण म्पूर्वोत्तरसूत्रविरुद्धम् । तथाच, अभ्युपगम्यचेमं व्यावहारिकं भोक्तृभोग्यलक्षणं विभागं स्या ल्लोकवदिति परिहारोऽभिहितः, इदानी म्परमार्थाभिप्रायेणेतिवचनेन, सूत्रकारोपि परमार्थाभिप्रायेण तदनन्यत्वमि त्याह, व्यवहाराभिप्रायेणतु स्या ल्लोकवदिति महासमुद्रस्थानीयता म्ब्रह्मणः कथयति, अप्रत्याख्यायैव कार्यप्रपञ्च म्परिणामप्रक्रियाञ्चाश्रयति सगुणे पूपासने पूपयोक्ष्यतइति कथनेनच पूर्वसूत्रविरोधस्य परैरेव स्पष्टीकृतत्वात् ॥

एव मुत्तरस्मिन्नपि 'असद्व्यपदेशान्नेतिसूत्रे 'नह्यय मत्यन्तासत्वाभिप्रायेण प्रागुत्पत्तेः कार्यस्याऽसद्व्यपदेशः, किन्तर्हि व्याकृतनामरूपत्वा द्धर्मा दव्याकृतनामरूपत्व न्धर्मान्तरम्, तेन धर्मान्तरेणाऽय मसद्व्यपदेशः प्रागुत्पत्ते स्सतएव कार्यस्येत्याद्युक्त्वा, असतश्च पूर्वापरकालसम्बन्धा दासीच्छब्दानुपपत्तेश्च 'असद्वा इदमग्र आसीदित्यत्रापि तद

त्मानग् स्वय मकुरु तेतिवाक्यशेषे विशेषणा न्नाऽत्यन्तासत्वम् । तस्मा द्धर्मान्तरेणै वाऽयमसद्यपदेशः प्रागुत्पत्तेः कार्यस्य, नामरूपव्याकृतंहि वस्तुसच्छब्दार्हं लोके प्रसिद्धम्, अतः प्राक् नामरूपव्याकरणा दसदि वासीदित्युपचर्यतइत्युक्त्वा सत्कार्यवादाङ्गीकारा त्कार्यस्य जगतो मिथ्या त्वस्य दूरीकृतत्वात् । तस्मा ज्जगत स्सत्यत्व मवार्यम् ॥

अतएव, फलाधिकरणे—सर्ववेदान्तेषु चेश्वरहेतुकाएव सृष्टयो व्यपदिश्यन्ते इत्युक्त म्परैः । अत्र यदुक्त म्पुरस्तात्, तस्यैव ब्रह्मणो व्यावहारिक्या मीशित्रीशितव्यविभागावस्थाया मय मन्य स्स्वभावो वर्ण्यतइति । यदपि वाचस्पतिमिश्रैः नित्यशुद्धबुद्धमुक्तस्वभावस्य ब्रह्मणः कुतः ईश्वरत्व ङ्कुतश्च फलहेतुत्वमपी त्यतआह तस्यैव ब्रह्मणः व्यावहा रिक्यामिति, नास्य पारमार्थिकं रूप माश्रि त्यैतच्चिन्त्यते ॥

किन्तु सांव्यवहारिकमित्यादि, यच्चापि वैषम्यनैर्घृण्याधिकरणे, अभ्युपेत्यच सृष्टे स्तात्त्विकत्व मिद मुक्तम् । अनिर्वाच्यातु सृष्टिरिति नविप्रविस्मर्तव्य मत्रापीति तत्सर्वं तत्तदधिकरणप्रतिहत मृषावाद प्रत्यु ज्जिजीवयिषा विजृम्भितमेव । परप्रदर्शितसाधकाना न्निर्मूलत्वा त्सूत्र विरुद्धत्वाच्च ॥

अन्यथा, तुष्यतु दुर्जनइ त्यभ्युपेत्य वादा न्केवल ङ्कण्ठरवे णोक्त्वा स्वाशय मनिबन्ध्य जना न्मोहयितुमेव भगवत श्शास्त्रकृतः प्रवृत्तिरिति साधिता स्यात् । तथाच, शास्त्रकृता जगत्स्रष्टु रीश्वरस्य कर्मफलहेतुत्व मुक्तम् । तच्च व्यावहारिक्या मवस्थायामिति ताव त्परै स्समन्वीयते । सेयं व्यावहारिकी नामाऽवस्था नकुत्राऽपि सूचिता ।

नाऽपि वेदान्तेषु श्रुतेति तामिमा न्दुरवस्था न्नवेदैव भगवा न्सूत्रकृत् एव मिय ममूलाऽपि स्वसमयप्रतिष्ठापनमूलेति परैः परिगृह्यते । यदि सृष्टिश्रुतयः पारमार्थिका नस्यु स्तर्हि, ईश्वरकारणता,म्प्रसाधयितु म्प्रतिज्ञाय–इतरकारणवादा न्निराकृत्य किन्तुसाधितं शास्त्रकृता । गौण्यसम्भवादित्याकाशोत्पत्तिश्रुतीनामेव गौणत्वकल्पनां नसेहे भगवा न्सूत्रकृत्, सकथं सर्वस्याअपि सृष्टे र्मिथ्यात्व मूरीकुर्वीत । आतश्च सृष्टिश्रुतिः पारमार्थिकी त्येव विज्ञायते ॥

अतएव, सन्ध्ये सृष्टिराहहीति सूत्रविवरणावसरे परैरेव तत्र संशयः, किं प्रबोधइव स्वप्नेपि पारमार्थिकी सृष्टि राहोस्वि न्माया मयीत्या ग्रुक्तम् ॥

एतच्च–प्रबोधे सृष्टेः पारमार्थिकत्वानभ्युपगमे नसङ्गच्छते, उभयोरपि मायामात्रत्वाविशेषात् । अथ पारमार्थिकस्तु नाऽयं सन्ध्याश्रयस्सर्गो वियदादिप्रपञ्चवदिति प्रपञ्चस्य पारमार्थिकत्व मवशतोऽङ्गीकृतमेव परैः ॥

## अनिर्वचनीयत्वानुपपत्तिः

अपरञ्च–परे जग दनिर्वचनीय माचक्षते, सोऽय मनिर्वचनीयः पदार्थ स्सौत्रान्तिकसमया दन्यत्र नकुत्राऽपि तन्त्रे प्रसिद्धः, अतोऽयमपरिग्राह्य आस्तिकानाम् । इदंच, समुदायाधिकरणेपरैः, यदाहि लोकप्रसिद्धः पदार्थः परीक्षकै र्नपरिगृह्यते तदास्वपक्षसिद्धिः परपक्षदोषोवा उभयम प्युच्यमान म्परीक्षकाणा म्बुद्धिसन्तान मारोहति, एव मेवैषोऽर्थ इति निश्चितं यत्तदेव वक्तव्यम्, ततोऽन्य दुच्यमान म्बहुप्रलपितं

मात्मनः केवल म्प्रख्यापयेदिति त दात्मनीनमपि पक्ष मधिक्षिपत्येव सदसदनिर्वचनीयत्वस्य सर्वलोकाऽप्रसिद्धत्वात् ॥

एतच्च, एकस्मिन्नसम्भवादित्यधिकरणे–परैः, एवं सति कथ म्प्रमाणभूतस्सं स्तीर्थकरः प्रमाणप्रमेयप्रमातृप्रमिति ष्वनिर्धारिता सूप देष्टुं शक्नुयात् । कथंवा तदनुसारिण स्तदुपदिष्टेर्थेऽनिर्धारितरूपे प्रव र्तेरन् । अतश्चाऽनिर्धारितार्थं शास्त्रम्प्रणय न्मत्तोन्मत्तव दनुपादेयवचन स्स्यादिति यदुक्त न्तदपि स्वीयम्पक्ष न्निराकरोति, अनिर्वचनीयवादस्या प्यनिर्धारितरूपत्वात् ॥

अन्यच्च, सर्वप्रमाणसिद्धं जग त्प्रतिलभमाना स्तत्प्रत्याख्यातु कामाश्च परे, आरम्भणाधिकरणे, सर्वज्ञ स्येश्वरस्यात्मभूतइव अविद्या कल्पिते नामरूपे तत्वान्यत्वाभ्या मनिर्वचनीये संसारप्रपञ्चबीजभूत इत्यादि यद्वदन्ति तद प्यसङ्गतम् ॥

अतएव–अभावाधिकरणे, तेऽपि सर्वलोकप्रसिद्धा म्बहिरवभास मानां संविद म्प्रतिलभमानाः प्रत्याख्यातुकामाश्च बाह्य मर्थं बहिर्वदिति वत्कार ङ्कुर्वन्ति, इतरथाहि कस्मा द्बहिर्वदिति ब्रूयुः, नहि विष्णुमित्रो वन्ध्यापुत्रवदवभासतइति कश्चि दाचक्षीत । तस्मा द्यथानुभवन्तत्व मभ्युपगच्छद्भि र्बहिरेवाऽवभासतइति युक्त मभ्युपगन्तुम्, नहि बहिर्व दवभासतइ त्यध्यवसितम्, नाऽयं साधु रध्यवसायो यतः प्रमाणप्रवृ त्त्यप्रवृत्तिपूर्वकौ सम्भवाऽसम्भवा ववधार्येते, नपुन स्सम्भवासम्भवपूर्वके प्रमाणप्रवृत्त्यप्रवृत्ती । यद्धि प्रत्यक्षादीना मन्यतमेनापि प्रमाणेन नोप लभ्यते तन्नसम्भवति, इहतु यथा स्वं सर्वैरेव प्रमाणै र्बाह्योर्थ उपलभ्य

मानः कथं व्यतिरेकाव्यतिरेकादिविकल्पै र्नसम्भवतीत्युच्येत । उपल
रेवे त्यादिना स्वोक्तनिखिलदूषणगोचरमेव भवति, आत्मभूतइवेति वत्क
णस्य सर्वप्रमाणसिद्धार्थापलापस्य चोभयत्र तुल्यत्वात् ॥

एवं विज्ञानवादनिराकरणपरवैयासिकसूत्रविवरणावसरे विज्ञा
वाद्युक्तं वहिर्वदिति वत्कारं निराकुर्वद्भिरपि परैः स्वसमयप्रतिपादनावस
वशतः प्रयुज्यमानइवकारोयथा, विश्वन्दर्पणदृश्यमानेति श्रीदक्षिणा
देवस्तुतिपद्ये 'वहिरिवोद्भातं यथा निद्रयेति' स्वसमयस्य विज्ञानवा
वैशेष्यं स्वाभ्युपगत मावेदयतीति यत्किञ्चि देतत् ॥

अथच, यत्प्रपञ्चस्य पराभिमतं स्वप्नतुल्यत्वन्तत् वैधर्म्याच्च न
मादिवदिति सूत्रकृता प्रत्याख्यातमेव । अथ स्मर्तारोपि 'असत्य मप्र
ष्ठन्ते जगदाहु निरीश्वराइति जगन्मिथ्यात्वस्य निरीश्वरवाद्यभिमत
मवधारयन्तीति परेपांपक्षो विदुपां नहिमव त्युपादेयः ॥

अत्र ॥ ननु, मायान्तु प्रकृतिमित्यादिना जगत्प्रकृते र्मायाश
तत्वेन मिथ्यात्वं श्रुतिसिद्धमित्याशंक्य मायापदेन मिथ्यात्वं नसिध्य
त्याह ॥ यथा—

मू ॥ मायानाम प्रसिद्धा विलसति निगमान्तेपु संश्रूयमाणा
शक्ति र्माहेश्वरीति त्रिभुवनजनितु र्वर्तते सावशेति ।
तस्य स्वाभाविकीति स्फुटतर मुदिता न्ता मकर्त्रींनिरुक्ता
कुर्व न्नीशस्य कर्त्रीं प्रमितिमथकथं शब्द मंगीकरोपि ॥

मायेति ॥ मायान्तु प्रकृतिमित्यादौ मायापदेन पारमेश्वरीश
रेव निगद्यते, नतु या मा सा मायेति विपरीतव्युत्पत्त्या मिथ्यात्व

तथाहि, तत्र प्रकृतिपदेन तस्या श्शक्तित्वमेव निर्धार्थं मायिनन्तु महे श्वरमि त्यनन्तरवाक्ये सा विशेषणीकृता न्हेशितुः, नहि मिथ्याभूतं विशेषणीकरणार्हम्, प्रयोजनाभावात्, विचित्रार्थसर्गकारिण्याः पारमेश्वर शक्ते र्मायापदाभिधेयत्व मनुगतम् । यामा सामायेति व्युत्पत्ति रव्युत्पन्न मतिसम्मान्या असाधुत्वात् । महामाये विश्वम्भ्रमयसि परब्रह्ममहिषी त्यनेन मायापदस्य शक्तिपर्यायत्व म्पराभ्युगतमेव । तथा तस्यैव शक्ति र्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रियाचेतितस्या श्शक्ते स्सहज सिद्धता, इच्छाज्ञानक्रियात्मकत्वञ्च श्रूयते नतु कल्पितत्वं सदसदनिर्वच नीयत्वंवा । किञ्च, श्रु ॥ विद्याविद्ये ईशते यस्तुसोऽन्यइति स्वशक्ति विशेषभूतविद्याविद्यानियन्तृत्वम पीश्वरस्य प्रमितम् । एतादृश्याः प्रकृते रेव, ईक्षते र्नाशब्दमिति जगत्कर्तृता न्निराचकार सूत्रकृत, एवं स्थिते मायाया ईश्वरकर्तृकत्वमेव हन्त ध्परे मायाख्यायाः कामधेनो र्वत्सौ जीवेश्वरावुभाविति सिद्धान्त मूरीकुर्वन्ति ॥

ननु, ईक्षते र्नाशब्दमिति सांख्यसम्मत मचेतन म्प्रधान ञ्जका रणमिति निर्धारितं नाऽस्मत्सम्मता मायानिराकृता इतिचे त्सत्यम्, अचेतनस्य जगत्कारणतां निराकुर्वाण स्सूत्रकृत् कथम् मिथ्यापदार्थ स्येश्वरकारणता मङ्गीकुर्वीत, यदि सजीवेश्वरस्यापि जगतो माया कारण मिष्येत । तर्हि मायाजिज्ञासेति सैव जिज्ञास्यतया प्रतिज्ञायेत । नहि तथा प्रतिज्ञायते, ननु, श्रु ॥ मायाभासेन जीवेशौ करोतीति श्रुति र्मायायाः कर्तृता म्प्रतिपादयतीति चे त्तस्या जिज्ञास्यतयावा विद्यमान

तयावाऽसूत्रितत्वात् सा नसूत्रकृत श्श्रवणपथ ङ्गताऽतो निर्मूलापि प
समयस्थितिमूला सर्वश्रुतिसूत्रसिद्ध मर्थ मपलपितुं नालमि त्युदास्यते॥

## मीमांसाविरोधः

अव॥ इत श्चाधिकं सूत्रविरोधं परपक्षे प्रदर्शयति, यथा—

मू॥ नाऽऽनन्दाद्या गुणा इत्यपि यदकथय स्तन्निरस्तंहि सूत्रे
जीवानां यद्विभुत्व क्कथयसि यदिद न्दूषित न्तच्च शास्त्रे।
मुक्ताना ङ्गत्यभाव स्तव सममिमतो बाधितो न्यायवर्गे
स्सिद्धान्त न्तावकीन न्नयपथविधुरंबोधितुं नालमेते॥ ९

नेति॥ परे ताव दानन्दादयो नगुणाः किन्तु स्वरूपमेवे
त्यभ्युपगच्छन्ति, एत म्पक्ष म्भगवा न्सूत्रकार आनन्दादयः प्रधानस्येति
गुणाइत्येववद न्निराचकार कण्ठतएव। सुखविशिष्टाभिधानादि त्यनेना
प्यानन्दस्य गुणत्वमेव सूचयामास॥

किञ्च–यदपि जीवानां विभुत्व मूरीकृतम्परै स्तच्च, उत्क्रान्ति
गत्यागतीनामित्यादिनाऽणुत्व म्प्रतिज्ञाय विभुत्व न्निराकुर्वता शास्त्रकृता
निर्धूतमेव। अत्र यद्वक्तव्यन्तदधिकजीवपरिष्कारेनिगदित मितिनेह।
तथा–मुक्ताना ङ्गति र्नास्तीति परपक्षोपि विपक्षएव वैयासिकसमयस्य
अर्चिरादिना तत्प्रथितेरिति गतिनिर्धारणात्। अत्रयत्सङ्कथनीय न्तत्त
र्धङ्गतिपरिष्कारे द्रष्टव्यम्। एव ञ्जीवस्य यदकर्तृत्व मिष्यते परेषां तदपि
'कर्ताशास्त्रार्थवत्त्वादिति सूत्रेण निराकृतमेव। अथ यदपि ब्रह्मणो
निर्विशेषत्व मूरीक्रियते परैः तच्च सर्वधर्मोपपत्तेश्चेत्यादिना सविशेषत्वं
निर्धारयता शास्त्रकृता दूरीकृतमेव। तथा योविवर्तवादोऽवतारितः

परै स्सोपि 'परिणामादिति परिणामकारणवाद म्परिगृह्णता सूत्रकृता समुत्सारितएव । विमृश्यमाने वैयासिकशाङ्करसमययोः पूर्वोत्तरपक्षा वामूलाग्रं व्यत्यस्यतइति विज्ञायते । अतएव, कार्यम्बादरिरित्यादिकार्या धिकरणे पूर्वपक्षतया पुरस्ता न्निबद्धपञ्चसूत्रीप्रतिपादितार्थं सिद्धान्ती कृत्य—परस्ता त्सिद्धान्ततया विवक्षितां परञ्जैमिनिर्मुख्यत्वादित्यादिसूत्र द्वयीं पूर्वपक्षीकृत्यच स्वपक्षे वैयासिकपूर्वोत्तरपक्षयो र्व्यत्यय ज्ञानद्भिरेव सङ्गतीकरणाय कम्पुनः पूर्वपक्ष माशंक्याऽयं सिद्धान्तः प्रतिष्ठापितः कार्यम्बादरिरित्यादिनेति स इदानीं सूत्रैरेवोऽपदर्श्यतइति व्याहृतम्परैः । यदि भगवत स्सूत्रकर्तुः पर ञ्जैमिनिरित्यादिकमेव पूर्वपक्षत येप्येत तर्हि तदेव पुरस्ता त्तेन निबध्येत । नहि भगवा न्सूत्रकार उत्तरपक्षं पुरस्ता त्पूर्वपक्षञ्च परस्ता न्निबध्य पूर्वोत्तरपक्षयो र्भ्रम ञ्जनस्य जनयितु म्प्रवर्तं यामा सेदं शास्त्रम् । तस्मा द्वैयासिकमीमांसासिद्धान्त पूर्वपक्षीकरणा यैव परेषा म्प्रवृत्तिरिति विशदम् ॥

## अन्योन्यविप्रतिषेधः

अव ॥ ननु, निर्विशेषपक्ष मनुमन्यन्ते बहुवः प्राञ्चो विपश्चित स्ततश्चेद मदुष्ट मित्याशं क्येद मसाधकमि त्याह । यथा—

मू ॥ पूर्णैनैव प्रयुक्ता निजमतनियतेनाऽभिमानेन बाढ
म्प्राञ्चोऽ कार्षुः प्रबन्धां स्त्वदभिमतपरा न्गर्भिता न्शुष्कतर्कैः ।
विस्रम्भ न्नालभन्ते कथमपिच परिश्रान्ति मेत्यापि चान्ते
वादा ह्यन्योन्यभिन्ना बहवइह परं साक्षिण स्ते नर्किस्युः ॥ १०

पूर्णेति ॥ यद्यपि निर्विशेषपक्ष मभिमन्वते बहवः प्राञ्चो वि
श्रित स्तथापि तेषा मत्र प्रवृत्तौ निजमतवासनानियतः पूर्णोऽभिमानए
भवति कारणम् । यतश्च स्वपक्षस्थेम्नि तेषां शुष्कस्तर्कएव भवति पर
म्प्रमाणम् । स्वपक्षस्य श्रुतिमूलत्वे तत्राऽन्योन्यविरुद्धविविधपदार्थाभ्यु
गमस्याऽनपेक्षितत्वात् । तथाहि, अद्वैतसिद्धान्तलेशसंग्रहे, शुद्ध म्ब्रह्मो
पादानमिति संक्षेपशारीरकानुसारिण इति । शबल मीश्वररूपमेव ब्रह्मो
पादानमिति विवरणानुसारिणइति । वियदादिप्रपञ्च ईश्वराश्रितमाय
परिणामइति मायाविद्याभेदवादिनइति । अन्तःकरणादे र्जीवए वोपादान
मिति मायाविद्याभेदवादि ष्वेकदेशिनइति । जीवएव स्वप्नदृष्टवत् स्वस्मि
न्नीश्वरादिसर्वकल्पकत्वेन सर्वकारणमित्यपि केचिदिति । ब्रह्ममाये
त्युभय मुपादानमिति पदार्थतत्वनिर्णयकाराइति । जीवाश्रितमायाविषयी
कृत म्ब्रह्मोपादान म्माया सहकारिमात्रमिति वाचस्पतिमिश्राइति ।
मायाशक्तिरे वोपादानमिति सिद्धान्तमुक्तावलीकृतइतिच । एव मनादि
रनिर्वाच्या भूतप्रकृति श्चिन्मात्रसम्बन्धिनी माया तस्या श्चित्प्रतिबिम्ब
ईश्वर स्तस्याएव परिच्छिन्नानन्तप्रदेशेषु आवरणविक्षेपशक्तिमदविद्याभि
धानेषु चित्प्रतिबिम्बो जीवइति प्रकटार्थविवरणइति । तत्वविवेकेतु
मायाविद्याभेद म्परिकल्प्य मायाप्रतिबिम्ब ईश्वरोऽन्तःकरणे चित्प्रति
बिम्बो जीवइत्युक्तमिति । संक्षेपशारीरकेतु, अविद्याया श्चित्प्रतिबिम्ब
ईश्वरोऽन्तःकरणे चित्प्रतिबिम्बो जीवइत्युक्तमिति । चित्रदीपेतु निर्वि
विध्यप्रक्रियायां विहाय चैतन्यस्य चातुर्विध्य म्परिकल्प्याऽन्तःकरण
वासनोपरक्ताज्ञानोपाधिभेदेन जीवेश्वरविभागः कल्पितइति । दृग्दृश्यवि

केतु चिलदीपव्युत्पादित क्कूटस्थं जीवकोटा वन्तर्भाव्य चित्त्रैविध्यप्रक्रियै वालम्बितेति । तत्रैव–पारमार्थिको व्यावहारिकः प्रातिभासिकश्चेति जीवस्त्रिविध इत्युक्तमिति । विवरणेतु प्रतिबिम्बो जीवो बिम्बस्थानीय ईश्वरइत्युक्तमिति । अन्येतु–यथासूर्यस्य रूपवतः प्रतिबिम्बोदययोग्य न्ततो विप्रकृष्टदेशं रूपवज्जलं गृह्यते नैवं सर्वगत स्यात्मनः प्रतिबिम्बो दययोग्य क्किञ्चिदस्ति ततो विप्रकृष्टमिति प्रतिबिम्बासम्भव मुक्त्वा सर्वगतस्य चैतन्यस्याऽन्तःकरणादिनाऽवच्छेदोऽवश्यम्भावीत्यावश्यकत्वा दवच्छेदो जीवइति पक्षंरोचयन्तइति । अपरेतु नप्रतिबिम्बो नाप्यवच्छेदो जीवः किन्तु कौन्तेयस्यैव राधेयत्वव दविकृतस्य ब्रह्मणएवाऽविद्यया जीवभावः व्याधकुलसंवर्धितराजकुमारदृष्टान्तेन ब्रह्मैव स्वाविद्यया संस रति स्वविद्यया विमुच्यतइति । तथा, जीवएकइत्येके बहवइत्यन्ये । केचि त्सविशेषानेकशरीरैकजीववाद मातिष्ठन्ते, अन्ये त्वविशेषानेक शरीरैकजीववादं रोचयन्त इत्यादिना विप्रतिपत्तिजात मनन्त न्द्रष्टव्यम् । यदि निर्विशेषपक्षो भगवत्या श्श्रुते स्सूत्रकृतोवा भवे त्सम्मत स्तर्हि पण्डितै रेव म्बहुधा विप्रतिपद्यमानेषु बहुषु पदार्थे ष्वेकंवा पदार्थं श्रुति र्नक्तो विवृणुयात् । कथं वा सूत्रकारोपि तन्त मनेकधा विप्रतिपद्य मान म्पदार्थं मनूद्य ननिर्धारयेत् । ततश्च विज्ञायतेऽय म्परकीयोवाद श्श्रुतिसूत्रप्रमाणविधुरः परंशुष्कतर्कमूलएवेति । अतएवोक्त म्भामती निबन्धे वेदान्तमीमांसा तावत्तर्कएवेति । नक्षमतए वैन म्पक्षं विचक्षण स्सूत्रकृत् । यतश्च सूत्रयामास तर्काप्रतिष्ठानादिति । विलक्षणाधिकर णोक्तन्यायेन तर्कैव न्निर्विशेषवादो प्यप्रतिष्ठितएव प्रतिबिम्बावच्छेदादि

रूपान्योन्यविरुद्धपक्षावलम्बिभि स्तत्तस्वानुगुणतर्के णाभास्यमानत्वात्
एवं विविधपक्षावलम्बने विस्रम्भानुपलम्भएव भवति कारणम्—अतएव
सिद्धान्तलेशसंग्रहे, अनेकेत्वस्मि न्नेकशरीरैकजीववादे मनःप्रत्यय मनु
मानाइत्युक्तम् । एव मन्योन्यविप्रतिषिद्धा निर्विशेषवादगता अवान्तर
पक्षा विप्रतिषेधाच्चासमञ्जसमितिन्याये नासामञ्जस्यंस्फुट मावेदयन्त्येव।

अत्र यद्यपि मध्वतन्त्रमुखमर्दनोपक्रमे, अस्मदीयपूर्वाचार्यग्रन्
थ्वपि महता यत्नेन परस्परपक्षप्रतिक्षेपपूर्वक मेकजीववादानेकजीववादा
व्यवस्थापन न्दृश्यते, नच तत्सर्वं न्तर्कादिग्रन्थेषु परस्परपक्षप्रतिपक्षादि
द्विरुद्धमेव, किन्त्वद्वितीयब्रह्मप्रतिपत्त्युपायेषु नानाविधेषु सम्भवत्सु विने
बुद्धिप्रावण्यानुसारेण उपदिदिक्षितोपायविशेषाणा न्तत्तद्विनेयबुद्धिस्थि
करणार्थत्वात् । सूक्ष्मारुन्धतीप्रतिपत्त्युपायतत्तदुपदेश्य चक्षुर्विक्षेपाभिमु
तारकाविषय नानाविधस्थूलारुन्धती प्रदर्शकवाक्यवत् । सिद्धशब्द
प्रतिपत्त्युपयुक्त कृत्रिमशब्दगत विविधप्रकृतिप्रत्ययादिविभागप्रदर्शकाने
व्याकरणव च्चाविरुद्धम् । किम्बहुना श्रुतिष्वपि क्वचि दाकाशादिसृ
प्रतिपादनं क्वचि त्तेजःप्रभृति सृष्टिप्रतिपादनमि त्यध्यारोपापवादाभ्
मद्वितीयब्रह्मप्रतिपत्त्युपायत्वा दविरुद्धमिति श्रीमदप्पयदीक्षितेन्द्रै सम
र्थितम् । तथापि, त दापातरमणीयमेव । तथाहि, सूक्ष्मारुन्धतीतार
दीनां सिद्धत्वेन उपेयप्रतिपत्त्यर्था उपाया अव्यवस्थिताइतिन्याय्
तत्प्रतिपत्त्यर्थाना मुपायाना मव्यवस्थिताना मविरुद्धत्वेपि पराभिप्रेतस्य
द्वितीयब्रह्मण वाऽसिद्धत्वेन तत्प्रतिपिपादयिषाप्रवृत्ताना मव्यवस्थिता
मुपायाना मन्योन्यविरोधस्याऽद्वितीयब्रह्मप्रतिपादनाऽसमर्थत्वस्यच दु

रत्वात् । अथ यदपि श्रुतिषु सृज्यक्रमविभेदस्य स्वपक्षदोषतौल्यम्प्रदर्श्य तस्य अध्यारोपापवादाभ्यां निष्प्रपञ्चब्रह्मप्रतिपत्तिसाधकतयाऽविरुद्धत्वं व्यवस्थापित न्तदपि विमर्शासहम् । श्रुतिगतसृज्यक्रमविशेषस्य कल्पभेद विषयतयाऽविरुद्धत्वेन तस्य निष्प्रपञ्चत्वसाधकत्वमते र्दुराशाविषयत्वात् । तस्मा त्परपक्षगतस्य विविधस्यापि वैमत्यस्य स्वमतदुस्थितिमात्रमूलत्वेन तत्परिजिहीर्षायासोपि परेषां स्वसामर्थ्यप्रदर्शनमात्रपरएव नतु याथार्थ्य निवेदनपरइ त्यल मधिकेन ॥

अव ॥ अथ विमतस्याऽनुपादेयताम्प्रतिजानीते । यथा,

मू ॥ मीमांसार्थप्रभेदा च्छ्रुतिततिविलसद्भक्तिकर्मप्रणोदा
दीशस्याऽशेषलोकप्रकरजनयितुः कल्पितत्वानुमोदात् ।
जीवस्याऽज्ञस्य सेश त्रिभुवनरचनाकल्पकत्वानुवादा
त्पक्षोऽयं निर्विशेषो नभजति सुतरां विन्दुलोके प्रतिष्ठाम् ॥ ११

मीमांसेति, निर्विशेषवादिभि र्मीमांसा व्याकुलीकृतेति बहुधा निरूपितत्वेन, मीमांसाया श्श्रुत्यर्थनिर्धारणैकप्रवृत्तिमत्त्वेन तत्परिपन्थिनः पक्षस्य श्रुतिविरुद्धत्वावगमेनच परकीयपक्षस्य प्रामाणिकजनाऽपरिग्रा ह्यत्वं सिध्यति ॥

किञ्च, श्रुतिशतसमधिगतयो र्भक्तिकर्मणो रनादरोपि तस्याऽनु पादेयताया म्भवति हेतुः । तथाहि, कर्मणां विविदिषासाधनत्वमेव नहि ज्ञानसाधनत्वमूरीकृत न्तस्मि न्पक्षइति विदितम् । सन्न्यस्य श्रवण कुर्यादिति कर्मिणो गृहस्थस्य श्रवणाधिकारोपि ते निषेधितइति केवला द्वैतपक्षे कर्म ण्यनादरः स्फुटएव ॥

एवं दैवी भक्तिरपि नविमते प्रतिष्ठा म..ते। देवस्य कल्पितत्व धारणेन तत्र विश्वासानुदयात्। ब्रह्मणो निर्गुणत्वावधारणेन तत्र भ योगायोगाच्च ॥

नच, देवस्य कल्पितत्व न्तत्रानवधारितमिति शंक्यम्, मा स्यायाः कामधेनो र्वत्सौ जीवेश्वरावुभाविति स्वतस्सिद्ध मीश्वर म श्वस्य तैः मायाकल्पिततया मिथ्याभूतए वेश्वरो व्यवहारायाऽङ्गीकृत विशदत्वात्। एवञ्च, ईश्वरस्य कल्पितत्वाभ्युपगमोपि परपक्ष स्याऽनु देवताया भवति साधकः ॥

अपिच–जीवस्य सर्वकर्तृत्वाभ्युपगमोपि तादृशएव। तथा सिद्धान्तलेशसंग्रहे, जीवएव स्वप्नदृष्टवत् स्वस्मि न्नीश्वरादिसर्वक कल्वेन सर्वकारणमित्यपि केचिदिति। जीवस्य स्वप्नदृष्टपदार्थकर्तृ मपिनसेहे भगवा न्सूत्रकृत्। अहो विमते ईश्वरादिसर्वकारणत्वमि परकीयस्य पथो व्यासपथा न्महद्वैलक्षण्यमिति यत्किञ्चिदेतत् ॥

अपिच, बद्धमुक्तव्यवस्थासिद्धेश्च, तथाहि, सिद्धान्तलेशसं एको जीवस्ते नैकमेव शरीरं सजीव मन्यानि स्वप्नदृष्टशरीराणीव नि वानि, तदज्ञानकल्पितं सर्वं जगत्। तस्य स्वप्नदर्शनवत् यावद सर्वो व्यवहारः बद्धमुक्तव्यवस्थापि नास्ति जीव स्यैकत्वात्। शु मुक्त्यादिकमपि स्वाप्नपुरुषान्तरमुक्त्यादिकमिव कल्पितम्। अत्रच स वितसकलशङ्कापङ्कक्षाळनमपि स्वप्नदृष्टान्तसलिलधारयैव कर्तव्यमिति ॥

नच, एकजीववाद स्यैकदेशिमतत्वे नाऽनेकजीववादिपक्षे मुक्तव्यवस्थासिद्धि रस्तीति शंक्यम्। संग्रहएव, तत्रा प्येकस्य जीव

क्वचि त्प्रदेशे कर्तृत्व म्प्रदेशान्तरे भोक्तृत्व मित्येव कृतहानाकृताभ्याग मदोषापनुत्तये वस्तुतो जीवैक्यस्य शरणीकरणीयत्वेने त्येकजीववादस्यैव सिद्धान्तिसम्मतत्वावधारणात् । अतएव, अद्वैतसिद्ध्यादिनिबन्धकर्तृभिर प्येकजीववादस्यैव सिद्धान्तितत्वाच्च । तस्मा त्परमतस्याऽनुपादेयत्व न्दुरपल्पमि त्यलम् ॥

ननु, श्रीहर्षसायनमाधवाचार्याप्पयदीक्षितनागेशभट्टादिभि रसंख्यै रसंख्यावद्भिः परिगृहीतत्वेन केवलाद्वैतस्याऽनुपादेयता नसिध्यतीतिचे त्सत्यम् । तथापि, श्रीबोधायनादिभि स्सर्वै र्महर्षिप्रवरै स्सुनिराकृतत्वेन दुर्वारैव तस्याऽनुपादेयता । तथाहि, भगवानापस्तंबः बुद्धेक्षेमप्रापणमिहै वनदुःखमुपलभेतेत्यादिनानिराचकारकेवलाद्वैतन् । तथा, श्रीबोधायनोपि बहुधा सूत्रवृत्तौ । अतएव, वृत्तिकारमतं सिद्धान्तभूतमेव परैः पूर्वपक्षी कृतमिति विदितमेव । एवम्, कपिलकणादगौतमपतंजलिमुखै र्बहुधा निराकृतमि त्यनुमोदितमेव व्यासतात्पर्यनिर्णयकारादिभिः । एवंच, सकलमहर्षिवरनिराकृतत्वं केवलाद्वैतस्य सर्वसम्मतमेव । एवंच विदुषा मपि वंशपारम्पर्यवासनासिद्धभ्रममूलस्य स्वमताभिमानस्य सम्भावि तत्वात् । ऋषीणां भ्रमासंभवस्य वैयाकरणसिद्धान्तमंजूषाकारै स्सुनिरूपि तत्वात् केवलाद्वैतस्य सकलमहर्षिवरनिराकरणकृताऽनुपादेयता तदन्यथानु पपत्त्या, ऋषिभि र्निश्चिनेत्यर्थे काशंकास्या न्महात्मनामिति न्यायेनच सुप्रतिष्ठितैवेति दिक् ॥

नच, तथा ऋषीणां मतयश्च भिन्नाइति न्यायेन विविधदर्शन प्रवर्तनपराणा मृषीणां मतिभेदस्य सहजत्वेन तन्मूलस्य केवलाद्वैतनिरा

करणस्याऽकिंचित्करत्वादिति शंक्यम्, बादरिमुनेरन्येषा मखिलानाम्
मुनीनां केवलाद्वैतप्रतिवादित्वावगमेन सू॥ विप्रतिषेधे भूयसां स्
त्स्वधर्मत्वमिति न्यायेन। केवलाद्वैते ब्रह्ममीमांसाविरोधस्य दुरुद्धरत
तेन बादरायणस्या प्यसम्मतत्वसिद्ध्याच, अपाणिनीयस्यपदस्येवाऽवै
सिकीयस्य समयस्याऽसाधुत्वनिश्चयेनच तस्याऽनुपादेयतादुर्वारेति यथा
मेव युक्तमुत्पश्यामः। सर्वथा केवलाद्वैतम्मत मग्राह्यमेव नः॥

यत्र ब्राह्मीहि मीमांसा कार्त्स्न्येनाकुलतां गता॥

ननु, विदुषा मनेकेषां केवलाद्वैतपथानुगमनेन जीवब्रह्मैक्यसि
रूपपरममुक्तिं गतत्वा त्केवलाद्वैतपथपरित्यागे परमपुमर्थसिद्धे रसंभ
त्तस्याऽनुपादेयता नयुज्यत इतिचे त्तदसत्। जीवब्रह्मैक्यसिद्धेः काश
सिद्धिसदृक्षत्वात्॥

तथाहि, यदि जीवब्रह्मैक्यसिद्धि विंश्वस्येत। तर्हि, केवलाद्वै
सम्प्रदायप्रवर्तकै विंपश्चिद्भि स्सगुणं ब्रह्म नोपास्येत। केवलाद्वैतमं
कारै स्सर्वैरपि सगुणस्यैव ब्रह्मण स्समाश्रितत्वेन तदन्यथानुपपत्त्
निर्गुणमुक्तिरूपजीवब्रह्मैक्यस्याऽश्रद्धेयत्वसिद्धे रवार्यत्वात्। तथा
अद्वैतसिद्धिकृतो मधुसूदनसरस्वतीस्वामिनः भक्तिरसायनादिभिः भ
मेव मुक्तिप्रदा मवधार्य, कृष्णा त्परं परमतत्त्व महं नजानइति कि
दन्त इश्लोकृष्णमेव समाश्रिश्रिर। श्रीमन्तोऽप्पय्यदीक्षितेन्द्रा अपि शि
रिणीमालायाम्—

भ्रमा ल्लोभा न्मोहा न्मतदुरभिमानादपि मुधा
नय न्त्यायुर्नाशं शिव तव पदांभोजविमुखाः।

वय न्ताव त्सर्वे सहसुतकलत्रादिभि रिमे
भवाम स्त्वद्दासाइति मति रियं मेऽस्तु सुदृढा ॥
इत्याशासानाः परमेश्वरमेव समुपासांचक्रिरे ॥

एवं श्रीमन्त श्शंकराचार्याअपि सुप्रसिद्धशैवाचार्यवर्यश्रीरेवणा सिद्धदत्तं श्रीचंद्रमौळीश्वरलिंगं समारेधु रिति विज्ञायते । किञ्च, भावना यदि भवे त्फलदात्री मामकं नगरमेवहि काशीति चरमसमये तेषां काशीस्मरणम प्युक्तमेवाऽर्थं निर्धारयति ॥

नच तेषां निर्गुणमुक्ता वविश्वासे तत्साधकमहानिबन्धविरचनं नसमुपपद्यतइति शंक्यम्, केवलाद्वैतविषयस्य ग्रन्थविरचनस्य स्ववैदुषी प्रकटनार्थत्वेन नानाविधशास्त्रविषयस्येव समुपपन्नतरत्वात् । अन्यथा, तेषां शिवकेशवादिसगुणमूर्त्युपासनाया असंभावितत्वात् ॥

एव मन्येपि स्वमतभंगभिया श्रीपार्वतीपरमेश्वरलक्ष्मीनारायणादि प्रधानदैवतानि परित्यज्यापि हाटकपरित्यागपूर्वकवराटकपरिग्रहन्यायेन निर्गुणमुक्त्यविश्वासेनैव सीतारामराधाकृष्णादीं स्तदंशावतारा न्समुपास तइति तस्मा न्निर्गुणमुक्ति र्विदुषां विस्रम्भभाजनं नभवत्येवेति दिक् ॥

नच, सगुणमूर्त्युपासन न्तेषां निर्गुणब्रह्मैक्योपयुक्तभावनासाधक मेव नतु निर्गुणमुक्त्यविश्वासमूलमिति चोद्यम्, विनिगमनाविरहात् । किञ्च, सगुणोपासनस्य निर्गुणब्रह्मैक्यफलकभावनासिद्धिमात्रसाधकत्वे व्यायामसाधनेष्विव सगुणमूर्तिषु भक्तियोगस्य निरुपयोगा त्तस्मा द्यथोक्तमेव युक्तम् ॥

नच, चंद्रमौळीश्वरलिंग न्तेषा मन्यथालब्धमितिशंक्यम्, श
च्छंकरविजयशिवतत्त्वरत्नाकरवेदान्तसारादिनिबन्धे श्श्रीरेवणासिद्धद
यैवाऽवगमात् ॥

अतएव, श्रीशृंगेरीमठाधिपानां श्रीसच्चिदानन्दभारतीस्वामि
प्रेरणेन तदास्थानकविभिः श्रीकाशीलक्ष्मणशास्त्रिभिः विरचिते गुरु
महाकाव्ये, तृतीयसर्गे ॥

श्रीचन्द्रमौळीश्वरलिंग मस्मै सद्रत्नगर्भं गणनायकंच ।
सविश्वरूपाय सुसिद्धदत्तं दत्वा न्यगादी चिर मर्चयेति ॥
सुरेश्वराचार्य सरस्वतीं त्वं संपूजय त्वास्व चिरादिहेति
दत्वाऽभ्यनुज्ञां विनताय तस्मै शिष्यै स्समस्तै स्सजगाम कांची मिति

अत्र, सुसिद्धदत्तम्, सुसिद्धेन–रेवणासिद्धमहायोगिना दत्तमि
मूलग्रन्थकारैरेव व्याख्यातम् ॥

ततएवच, शिवतत्त्वरत्नाकरे, चतुर्थे कल्लोले द्वादशे तरंगे—
तत स्स रेवणासिद्धसंप्रदायप्रवर्तिनां ।
शंकराचार्यवर्याणां पारंपर्यक्रमागतम् ॥
सन्यासिन मुपाश्रित्य विनयावनतोऽधिकम् ।
वृत्तान्त मखिल न्तस्मै यतये स्वं न्यजिज्ञपदिति ॥
रेवणासिद्धसंप्राप्तं चन्द्रमौळीशम प्यदात् ।
आराध्य च्चानेन लिंगेन तवाऽभीष्टासिरित्यपि ॥ इतिच ॥

शिवतत्त्वरत्नाकरग्रंथकारश्च ।
विद्यारण्यकृतिंचैव पितामहसुसंहिताम् ।

विलोक्याऽयं विरचितः कल्लोलोऽभू च्चतुर्थकइति ॥

श्रीविद्यारण्ययतिविरचितपितामहसंहिता मनुसृत्य स्वेन व्यरचीति निबध्न न्नुक्तार्थे स्वकपोलकल्पितत्वशंका मुन्मूलितवान् ॥

शिवतत्त्वरत्नाकरश्च, हिंदूदेशपरिपालकप्राचीनशासनविमर्शकैः रावुबहदूर्, वि. ये. कृष्णशास्त्रिप्रभृतिभिः जर्मन्देशीयविद्वद्भिरपि बहुधा प्रशंसितइति विदितमेव । तस्मा च्छैवदर्शनं सर्वतः पुरातनमिति सिद्धम् । एतेन शैवदर्शन मर्वाचीनमिति वदन्तः परे पराहता इत्यलं प्रसक्तानुप्रसक्त्या ॥

नन्वेवं श्रीरेवणासिद्धस्य श्रीचंद्रमौळीश्वरलिंगप्रदातृत्वाभ्युपगमे इष्टलिंगधारित्वासिद्धिः । स्वस्येष्टलिंगधारित्वे शिष्येभ्योपि करपूजार्हे ष्टलिंगस्यैव प्रदेयत्वेन पीठपूजार्हलिंगप्रदत्वायोगा दितिचे न्न, स्वस्येष्ट लिंगधारित्वेपि स्वान्तेवासिनां श्रीशंकराचार्याणां पीठलिंगपूजापरस्मार्त मतप्रवर्तकत्वेन तेभ्य स्तथाविधलिंगप्रदानसंभवात् । अन्यथा, तस्य द्वादशशैवाचार्यान्तर्गण्यत्वानुपपत्त्या इष्टलिंगधारित्व स्यान्यथानुपपत्ति सिद्धत्वेन निश्शंकत्वात् । अपिच, व्यासकाश्यां श्रीवेदव्यासगुरुत्वेन सुप्रसिद्धश्रीघंटाकर्णशिवाचार्यविग्रहस्या पीष्टलिंगलांछितत्वेन शैवाचार्य विषयेष्टलिंगधारणानुमानस्य निष्कळंकत्वाच्च ॥

## साक्षिनिरूपणम्

अत्र ॥ ननु-भवता केवलाद्वैतस्य व्यासाशयविरुद्धत्व मवधार्य तत स्तस्याऽनुपादेयता निगद्यते । तन्नयुज्यते केवलाद्वैते व्यासाशयविरुद्धत्व

निरूपणस्य विद्वेषमूलत्वेन तटस्थजनापरिग्राह्यत्वादि त्याशंक्य विमल
व्यासाशयपरिपन्थित्वे विपक्षानेव साक्षितया प्रदर्शयति ॥ यथा—

मू.॥ सूत्रं श्रुत्या विरुद्धं कथयति विशद स्भामतीग्रन्थकारो
मीमांसाया विमर्शेऽद्वयमतपरता मप्पयाजी ब्रवीति ।
आचष्टेऽर्थं त्वसम्य ङ्मुनिरिति मधुसंसूदन स्स्वप्रबन्धे
दूरोऽध्वा निश्चितस्ते भवति खलु पथ स्सूत्रकर्तु र्महर्षेः ॥

सूत्रमिति ॥ अत्रेद म्बोध्यम्, शाङ्करभाष्यविवरणभूतभाम
निबन्धकृ द्वाचस्पतिमिश्रः परिमळाद्यनेकनिबन्धरचने नाऽद्वैतविद्या
विस्दाविरा ड्प्पयाजी, अद्वैतसिद्ध्यादिनानाग्रन्थनिर्माता मधुसू
सरस्वतीचेति त्रयोपि केवलाद्वैतपक्षे परमप्रामाणिकाइति विदितमे
येषा मभ्युपगतेऽप्रामाणिकत्वे भवे त्केवलाद्वैतमेवाऽप्रतिष्ठित न्तेषाम्प्र
णिकत्वे केवलाद्वैत मभिमन्यमानः कस्संशयीत । तस्मा देते त्रयो
विवादे साक्षितया गृहीताइति ॥

तथाच–आनन्दमयाधिकरणे भामत्याम्, सूत्राणि त्वेवंव्या
यानीति भाष्यप्रतीक मुपादाय, वेदसूत्रयो र्विरोधे, गुणमुख्यविरो
गुणेत्वन्यायकल्पनेति सूत्रा ण्यन्यथानेतव्यानीति । एतेन परै स्सू
वेदविरोध न्निर्धार्य ता न्यन्यथानीतानीति स्फुटमेव ॥

गुणमुख्यविरोधन्यायो न श्रुतिसूत्रविरोधपरिहारार्थ म्प्रवृत्तः
तन्वे कुत्रापि सूत्रे श्रुतिविरोध स्यानाशङ्कितत्वात् ॥

तथाहि, नवमाध्याये चिन्तितम् । यथा, ज्योतिष्टोमेऽग्नीषोमीयपशा वेकवचनान्तबहुवचनान्तौ द्वौ पाशमन्त्रौ भिन्नयो श्शाखयो। राम्नातौ । श्रु ॥ अदितिः पाशं प्रमुमोक्त्वेतम् । इत्येकत्व, अदितिः पाशा न्प्रमुमोक्त्वेता, नित्यपरत्र । एव मग्नीषोमीये पाशैकत्वपाशबहुत्वाभिधायिमन्त्रयो र्विकल्पाधिकरणे सू ॥ विप्रतिपत्तौ विकल्पः स्या त्समत्वा द्गुणेत्वन्यायकल्पनैकदेशत्वात् ।९।३।१५॥ योऽयं पूर्वोदाहृतो बहुवचनान्तः पाशमन्त्रः, तस्य प्रकरणा दुत्कर्षो बहुपाशयुक्तेषु पशुगणेषु कर्तव्यः कुतः, एकस्मिन्पशौ प्रकृते तस्याऽनन्वितत्वात् । इतिचेत्, नैवम्, नाऽसा वुत्कष्टव्यः, किन्त्वेकवचनान्तेन मन्त्रेणसह विकल्पनीयः । नहि पाशा नित्यत्र प्रधानस्याऽनन्वितत्व मस्ति प्रातिपदिकविभक्त्योः प्रातिपदिकं प्रधानं, धर्मिवाचकत्वात् । विभक्तिस्तु, कर्मत्वकरणत्वादिधर्मवाचकत्वा द्गुणभूता । तथा, विभक्तिवचनयो र्विभक्तेः कर्मादिकारकवाचित्वा त्प्राधान्यम् । वचनस्य कारकसंख्याभिधायित्वा द्गुणत्वम् । तथासति बहुवचनान्ते पाशशब्दे प्रातिपदिकं कर्मकारकविभक्ति श्चैकस्मिन्नपि पाशे संगच्छेते, गुणभूतेतु बहुवचने लक्षणावृत्तिः कल्पनीया पाशावयवगतं बहुत्वं लक्ष्यतइति । तस्मात् गुणभूतं वचनमात्र मनुसृत्य कृत्स्नस्य मन्त्रस्य प्रकरणपाठो न बाधनीयः, किन्तु प्रधानानुसारेण मन्त्रयो स्समानत्वा द्विकल्पः कर्तव्यइति । एतेन गुणमुख्यविरोधन्यायो न श्रुतिसूत्रविरोधविषयइति श्रुतिसूत्रविरोधगुणमुख्यन्याययोः कर्णमुष्कसांगत्य समकक्ष्यत्व मितिच व्यक्तम् । तस्मा ल्लक्ष्यविरोधभ्रान्त्या पाणिनीयस्येव श्रुतिविरोधभ्रान्त्या मीमांसासूत्रस्याऽन्यथानयन मयुक्तमेव ॥

ननु, भामतीनिबन्धशंकित श्रुतिसूत्रविरोधः कल्पतरुपरि श्रीदीक्षितेन्द्रैः परिहृतः, कथं स केवलाद्वैतं व्यासपथा दूरीकर्तुं श यात् । तथाहि, कल्पतरुपरिमळे "ननु, आम्नायस्याऽर्थं वक्तुं प्रभव नाम्नायं पर्यनुयोक्तुमिति न्याया दपर्यनुयोज्ये वेदे पाशैक्येपि बहुव कथंचि दवयवबहुत्वाभिप्रायं योज्यते, पौरुषेयेषु तु सूत्रेषु स्वायत्ते श प्रयोगे सर्वज्ञेन सूत्रकृता किमर्थं श्रुतिविरोधभ्रान्तिकरसूत्रप्रणयनं इ मित्याशंक्य, अध्याहाराद्यपेक्षानेकार्थप्रत्यायनार्थ मित्याह, अध्याह दिभि र्नेयानीति, एतेन सूत्रे श्रुतिविरोधभ्रान्तिकरत्वमेव नतु श्रुतिवि इति तादृशभ्रान्तिकरत्वम प्यध्याहारादिभि रनेकार्थप्रत्यायनार्थ मिति प्रसाधितत्वेन भामतीनिबन्धवचनस्य श्रुतिसूत्रविरोधपरत्वाभावा दितिचे उच्यते, भामत्याम्, श्रुतिसूत्रयो र्विरोधे "गुणमुख्यविरोधेतु गुणे त्वन्य कल्पनेति श्रुतिसूत्रविरोधस्य कंठरवेणाऽभ्युपगतत्वेन दीक्षितेन्द्रः समर्थनस्य स्वगोष्ठीतुष्टिमात्रसाधकत्वेनाऽकिंचित्करत्वात् । तत्र श्रु सूत्रविरोधेऽनभिप्रेते गुणमुख्यविरोधन्यायावतारस्याऽयुक्तत्वाच्च, भग आचार्यस्य श्रुतिविरोधभ्रान्तिकरसूत्रप्रणेतृत्वाभ्युपगमेपि तस्य प्र कत्वादिदोषतादवस्थ्याच्च, अनेकेषु विवक्षितेष्वेकस्य कस्या प्यर्थ निर्धारणायोगा दनेकार्थप्रत्यायनार्थत्वेऽनिर्धारितार्थसूत्रप्रणयने नाचार्यस्य नाप्तत्वापत्ते रवार्यत्वाच्च । तस्मा त्त्वरै स्सूत्रविरोधोऽभ्युपगतएव सोपि स्वमतविषयसूत्रविरोधमूलएवेतिच व्यक्तमेव ॥

ननु, सूत्रस्य स्मृतित्वात् श्रुतिविरोधे तदन्यथानीत मेताव श्रुतिसिद्धस्य केवलाद्वैतस्य न कापि क्षति रितिचे न्न, सूत्राणां श्रुत्यन्त

निर्धारणार्थमेव प्रवृत्तत्वेनाऽवैसिकीयस्य श्रुत्यन्तार्थस्याऽजैमिनीयस्य वेदार्थ स्येव, अपाणिनीयस्य पदस्येवचाऽसाधुत्वस्य सर्वसम्मतत्वात् । अन्यथा, वैयासिकसूत्राणि प्रत्याख्याय श्रुतीनामेव व्याख्येयतया परैरपि लोक प्रत्यायनार्थं सूत्रभाष्यप्रणयनस्य नैरर्थक्यापत्तेः, सूत्रेषु श्रुतिविरोधमतेः स्वपक्षविरोधमूलतया तेन स्वपक्षस्यैव सूत्रविरुद्धत्वाभ्युपगमद्वारा श्रुतिविरु द्धत्वाभ्युपगमरूपत्वात् ॥

तस्मा त्केवलाद्वैतं व्यासपथा द्बहिर्भूत मत श्श्रुतिपथं नानु गच्छति ततो ब्रह्मपथसंज्ञां नार्हतीति सिद्धम् ॥ किञ्च, अत्रेदञ्चोद्यम् ॥

"भगवा न्वेदव्यासः किं किञ्चिज्ज्ञतया वेदार्थ मविज्ञायैव सूत्राणि निर्ममे ? उत, विज्ञायापि प्रतारकतया वेदविरुद्धार्थनिर्दिधार यिषयेति "वेदविरुद्धसूत्रकरणे विमृश्यापि नाऽन्यप्रकार ङ्कारण मुत्प श्यामः । कथमपि न पररीत्या भवति बहुमानपात्रं सूत्रकृत् । एवञ्च स्वाभिमतार्थविरुद्धतया सूत्रेषु वेदविरोधः परै रूरीकृतएवेति तेन शुद्धा द्वैतं व्यासाशयविरुद्धमिति परैरेवाऽङ्गीकृतमितिच विदितमेव ॥

तथा—श्रीमन्तोऽप्पयदीक्षितेन्द्राअपि - शिवार्कमणिदीपिकायाम्, यद्यप्यद्वैतएवेतिपद्ये, तत्रैव ब्रह्मसूत्राण्यपिच विमृशता म्भान्ति तात्पर्य वन्तीति वचनेन निसर्गत स्सामरस्येन नाऽद्वैते तात्पर्यवन्ति भवन्तीति व्यञ्जयामासुः । तथा, मधुसूदन सरस्वती—

श्लो ॥ नस्तौमि तं व्यास मशेष मर्थं
सम्य ङ्न सूत्रैरपि यो बबन्ध ।

विनापि ते स्संग्रथिताखिलार्थ
न्तंशङ्करं नौमि सुरेश्वरञ्च ॥

इतिपद्येन केवलाद्वैतसाधकार्थाऽनिबन्धनरूपाऽपराधेन वेदव्
सस्य स्तुत्यनर्हता मापादयन् वैयासिकमीमांसायाः स्वपक्षविपक्षतां स्फु
तर मघोषीत् ॥

अहो दुरन्तो महिमा स्वमताभिमानस्य येन भगवा न्वेदव्
सोपि तृणीक्रियते । यश्चनाम व्यभज द्वेदा न्सङ्ग्राह पुराणा न्यष्ट
दश, जग्रन्थ पञ्चमवेदसमभिख्या म्महती म्भारतसंहिताम् । असूत्रय
मीमांसा म्ब्रह्मविषयाम्, किमन्य न्नाकरो यद्भव त्यार्याणा म्भोगमो
साधनम् ॥

किञ्च, यस्य परमाप्तत्वानभ्युपगमे नाद्रियेर न्नार्यमहाजनाइ
सञ्चिन्त्य तान्रञ्जयितुं परैरपि स्वमतमूलभाष्यस्य मूलीकृता यस्यै
मीमांसा, एतादृक्षप्रभाव आर्यकुलस्य परमाप्तो भगवान् स्तुतिं नार्हतीति
व्यक्तं वक्तुं श्रोतुं वा कोना मार्यः क्षमेत त्यल म्बहुना ॥

ननु, नोरीकर्तुं शक्यते सात्यवतेयो निरागाइति । यतश्च, सू
संहितादिषु बहुषु पुराणेतिहासेषु शुद्धाद्वैत मतिविशद न्निबध्य त
सूत्रेष्वपि न न्यबन्धिष्टे त्यपिशब्देन द्योतितमे वेतिचेत्, सत्यन्, य इ
मेव सूतसंहितादीनां स्या द्रचयिता । तर्हि न स्तुति मर्हत्येव, अह
भवता सूतसंहितादीना न्नव्यासप्रोक्त ताऽङ्गीक्रियतइतिचेत्, उच्यते
विदितमेव, सूतसंहितादिषु केवलाद्वैत मतिविशद न्निबद्धमिति, सू
षुतु विरोधः केवलाद्वैतस्य सर्वशो दृश्यतइतिच, अतश्च विज्ञायते एत

भय त्नभव त्येककर्तृतमिति । नहि बाल्यदशायां मीमांसांनिर्माय वार्धके पुराणानि व्यरचीदिति वक्तुं युज्येत यद्येव न्तर्हि नोरीक्रियेत मीमांसा किन्तु दूरीक्रियेतैव, सा परै र प्यूरीक्रियते, तस्मा त्प्रक्षिप्तबहुळान्येव पुराणानि तत्तन्मतप्रवर्तककृतसंस्करणवशा दित्यलम् ॥

यद्यपि पुरा भगवता पुष्पदन्तेन, महिम्नस्तवे पारमेश्वरैश्वर्यस्य तर्कितु मशक्यतया न वैयासिकी मीमांसा सप्रयोजनेति मत्वा किमीहः किङ्कायइत्यादिना कुतर्कोऽयङ्कांश्चिन्मुखरयति मोहायजगतामित्यन्तेन पद्येन ब्रह्ममीमांसा मबहुमन्वानेन नीतो वाच्यतां द्वैपायनः, तथापि, परमपुमर्थस्य परमेश्वरसाक्षात्कारैकनिदानतया, तत्साक्षात्कारस्यच निदिध्यासैकसाध्यत्वेपि निदिध्यासनस्य श्रवणमननवर्जं मलभ्यता मन्वता करुणोदन्वता महता न्यबन्धि जिज्ञासा मुनिनेति स नदुष्यत्येव किमपि, पुष्पदन्तेनतु निदिध्यासनैकप्रवणेन स्वदृष्ट्या विचारस्य कालक्षेपकरता म्मत्वा स्तुतिपारवश्या देवाऽनादृता वैयासिकी जिज्ञासेति न तस्य लक्ष्यते तात्पर्यं सात्यवतेयगर्हणे, य द्यत्र परै र्वेदव्यासो न प्रामाणिकतया परिगृह्येत, तर्हि ग्रन्थो नविस्तीर्येत । यतश्च स परिगृह्य निगृह्यतइति तु विषादास्पदमि त्यलम्बहुना ॥

तस्मात्, न केवल म्पुराणेतिहासादिकम् किन्तु वैयासिक मीमांसाविरुद्धम् 'पशुपति रहंकाराविष्ट स्स एव पशु रित्यादि प्रात्यक्षिक श्रुतिसूत्रविरुद्धार्थं निपद्गणम प्यसम्मतमेव व्यासमहर्षे रि त्यवश्य मेष्टव्यमेवेत्यलम् ॥

अपिच, कार्यं म्बादरित्यधिकरणे पूर्वोत्तरपक्षौ व्यत्यस्यन्तः आवश्यकदेशे 'नाणुरतच्छ्रुतेरितिचेन्नेतराधिकारात्, विकारित्वादिति चेन्न प्राचुर्यात्, प्रतिषेधादितिचेन्न शारीरादित्यादिना स्वयमेवोऽदाहृत्यपि, प्रतिषेधादितिचेन्नेत्यधिकरणं इतिचेन्नेत्यध्याहृत्य सूत्रसिद्धान्तिमर्थ म्प्रतिक्षिपन्तः, सूत्राणि त्वेवं व्याख्येयानीत्यादिना मीमांसां व्याकुलं कुर्वन्तः, स्वीये सर्वदर्शनसंग्रहे केवलाद्वैतव्यतिरिक्तमेव व्यासस्य मं निर्धारयन्तश्च श्रीमन्त श्शङ्कराचार्याअपि मीमांसाया स्स्वमतपरिपन्थित्वे भवन्त्येव साक्षिणः प्रबला इति दिक् ॥

अत्र॥ ननु, श्रीमद्भि रप्पयदीक्षितेन्द्रै र्न्यायरक्षामणौ मीमांसा सूत्राणि शुद्धाद्वैतसाधकतया प्रसाधितानि, किञ्च, व्यासतात्पर्यनिर्णय तत्कर्तृभिश्च केवलाद्वैतएव व्यासस्य तात्पर्यमि त्यवधारित मतः केवलाद्वैत म्मीमांसानुगतमेवे त्याशंकाम्परिहरति ॥ यथा—

मू॥ भीष्मद्रोणमुखा स्सुयोधनवशे शौर्यं म्प्रदर्श्याद्भुतं
नावाप्तु र्विजयं यथैव भुवनप्रख्यातदोर्विक्रमाः ।
विद्वांसोऽप्ययदीक्षितप्रभृतयो प्यद्वैतपक्षे तथा
नापु स्सिद्धि मभीप्सितस्य कृतिभि श्शक्ति म्प्रदर्श्यात्मनाम्॥ १९

भीष्मेति, न्यायरक्षामणा वुपक्रमे-सूत्रात्मा पारिजात स्सकल मभिमत म्मह्य मर्थं सदद्यादिति सूत्रात्मनि मीमांसाशास्त्रे पारिजातत्व मारोप्य तस्य स्वाभिमतार्थप्रदानोपयोगित्वरूपपरिणामालङ्कारनिबन्धनेन शास्त्रस्य चिन्तितार्थप्रदानदक्षत्व न्नेन निजवैदुषीप्रसाध्यमानस्वमतानु

कूलार्थप्रदत्वञ्च ध्वनितम् । तेन मीमांसा न निसर्गत स्स्वानुकूले त्यभि व्यज्यते ॥

तथाच–आनन्दमयाधिकरणे, विकारशब्दा दितिचेन्नेति सूत्र वृत्तौ विकारशब्देनाऽवयवो लक्ष्यते, तद्वाचिपुच्छशब्दो विकारशब्दः, सएव विकारः विगतकार्योऽनर्थकशब्द इत्यादिक न्द्रष्टव्यम् । अय मर्थो निगदितो नकेनापि भाष्यकृता, अथ निजमूलाचार्येणापि, तस्मा दयं स्ववैदुष्योप्रभावमात्रमूलोऽमूलतयाऽनर्थकएवेति विदितमेव ॥

एवं भेदव्यपदेशाच्चेति सूत्रवृत्तौ–भेदविरोधी अपदेशो भेदव्यप देशः भेदप्रपञ्चमिथ्यात्वपर्यवसायी, श्रु॥ यतो वाचो निवर्तन्ते अप्राप्य मनसासहे त्याद्युपदेशः तद्विरोधा दिति भेदव्यपदेशपदं भेदविरुद्धाऽभेदोप देशपरत्वेन समर्थितम् । अय मर्थः पाण्डितीप्रकर्षादेवाऽऽकृष्यमाण आर्जव वैधुर्या दानर्थक्यमेव व्यनक्ति, । यदि पाराशर्य एतादृशतात्पर्यकमेव शास्त्रं विरचयेत्, तर्हि परमाप्ततामेवोत्सृजेत् न्यायरक्षामणौ निरू पिताना मर्थाना मसामंजस्यं वेदपथे सविस्तर मुपपादितमिति नेह, तस्मा त्परकीयनिबन्धेषु वैदुष्यातिशयएव दृश्यते नतु शास्त्रकृत्तात्पर्यमि त्यलम् ॥

एतेन भीष्मद्रोणादयो यथा राज्ञ स्सुतरा ञ्जयो न लभिष्यतइति विज्ञायापि तत्पक्षे स्थितिवशात् यथाशक्ति निजनिरतिशयविक्रमविनियो जनेनैव चारितार्थ्यं ममन्विषत ॥

तथैव श्रीदीक्षितेन्द्रप्रभृतयोपि स्वपक्षस्य विजयो न भविष्यतीति विदित्वैव स्ववैदुषीविशेषप्रदर्शनपरैः कृतिशतैरेव कार्तार्थ्यं मभजिषतेति हृदय मुन्नीयते ॥

# व्यासतात्पर्यनिर्णयः

ननु, व्यासतात्पर्यनिर्णये तत्कर्त्रा ब्रह्ममीमांसायाः केवलाद्वै
परत्वं समर्थितम्, इतिचे न्न सार मेतत् तेन तथाऽसमर्थितत्वात् । तथा
यदि मीमांसायाः केवलाद्वैतपरत्वप्रसाधनं शक्येत, तर्हि सर्वेषा
केषाञ्चिद्वाऽधिकरणानां स्वमतानुकूलार्थपरत्व म्प्रसाध्येत । अथवा, मी
साया केवलाद्वैतविरुद्धार्थबोधकतया परिदृश्यमानानांवाऽधिकरणा
न्तादृशविरोधः परिह्रियेत। तत्कृता वक्षरशोऽन्विष्यमाणायामपि साध
दाहारो बाधकपरिहारोवा लक्ष्यते न कियान्नपि । किन्तु, तत्र कस्मि
व्यासतात्पर्यमिति संशये सति तन्निर्णयाकांक्षाया मस्मदादीन्प्रति म
स्थत्वेन सम्प्रतिपन्नकपिलकणादगौतमपतञ्जलिजैमिनितन्त्रेषु सूत्रभा
वार्तिकवृत्तिग्रन्थेषु पाशुपतपाञ्चरात्रबौद्धार्हतचार्वाकतन्त्रेष्व प्युक्तरी
दशसु तन्त्रेषु याव त्परमतं न निराक्रियते ताव त्स्वमत मप्रतिष्ठित म
तीति न्यायेन स्वमतस्थापनाय परमतनिराकरणप्रस्तावे कपिलक
दादिभिः केवलाद्वैतमेव व्यासतात्पर्यविषयइति मत्वाऽनूद्य निराकृतं
तदेवाऽद्वैतं व्यासतात्पर्यविषयमिति निर्णिनोपितम्, नत्वेव निर्णीतम
कथम् तन्निर्णयित?

केवलाद्वैतस्य कपिलादिभि र्निराकृतत्वमेवहि व्यासतात्पर्यवि
यत्वे कारणत्वेन भवता गृहीतम् । कपिलादिकृतकेवलाद्वैतनिराकरणस्य
तदेव व्यासतात्पर्यविषयइति मत्वे त्यनेन व्यासतात्पर्यविषयत्वमेव भव
हेतुत्वेन परिगृहीतम् । एव मात्माश्रयदोषदूषितोर्थः कथ मिह सि
न्साधये त्समीहित म्भवतः ॥

ननु--सांख्यशास्त्रे, नाऽविद्यातो प्यवस्तुना बन्धायोगा दित्यादिना केवलाद्वैत मतिविशदं निराकृतम् । तादृशबाधाकांक्षायां व्याससूत्रेषु परस्परविरुद्धार्थप्रतिपादकनानाभाष्यप्रचारेण संशये सति तन्निर्णयाकांक्षा यांश्च सत्यां पतञ्जलिजैमिनिगौतमकणादादिमूलकाराणा म्पाशुपतादि तान्त्रिकमतप्रविष्टाना म्ब्राह्मतप्रविष्टानाञ्चाऽद्वैतानभ्युपगमा द्बादित्वा सम्भवेन पारिशेषिकप्रमाणा त्प्रकारान्तरेण तन्निर्णयाकांक्षानिवृत्त्यसम्भ वाच्च व्यासएव वादित्वेन पर्यवस्यति ॥

इतरथा तादृशबाधन्तरासम्भवात् कपिलतन्त्रे तन्त्रान्तरेषुवा यत्र कुत्रचि द्भेदवादित्वेन व्यास मुररीकृत्य तदभिमतभेदानुवादपूर्वकनिरा करणपरसूत्राणा मभावात्, व्याससूत्रेषु महता प्रयत्नेन असाधारण्येन कपिलमेव लक्ष्योकृत्य तन्मतनिराकरणेन तद्व त्कपिलसूत्रेष्वपि व्यासमेव लक्ष्यीकृत्य तन्मतस्य निराकरणीयत्वावश्यम्भावाच्च व्यासएव वादित्वेन पर्यवस्यतीति सुग्रक्त मितिचे न्नैत त्सारम् । कापिलादितन्त्रेषु यत्र कुत्र चित् भेदानुवादपूर्वकनिराकरणपरसूत्राणा मभावेन भेदवादस्यै वोभय थादिसम्प्रतिपन्नत्वप्रतीते स्तस्य स्वस्य कार्यकारणभावाविवेकवत्त्वमात्र साधकत्वेन व्यासस्य केवलाद्वैतवादित्वासाधकत्वात् । स्वमतं व्यासेन निराकृतमिति पुनः कपिलस्य व्यासमतनिराकरणप्रवृत्ते र्मत्सरप्रयोज्य तया निर्मत्सरस्याऽनावश्यकत्वात, वैयासिकमीमांसायाः कपिलतन्त्रो त्तरकालप्रवृत्तत्वेन कापिलतन्त्रे वैयासिकमतनिराकरणयोगायोगात् ॥

ईश्वराऽसिद्धे रित्यादिकपिलसूत्रेषु व्यासाभिमतजगत्कारणीभूतेश्व

रादिनिराकरणमात्रेण चरितार्थतया केवलाद्वैतानुवादपरसूत्राणां व्यासाभिमतार्थानुवादपरत्वमेव कल्पनीयमिति निर्बन्धाभावाच्च ॥

नच, ईश्वरासिद्धे रित्यादिकपिलसूत्रै निराक्रियमाण स्येश्वरः गौतमादिमतसाधारणत्वेन तेषां सूत्राणां व्यासमतमात्रनिराकरणपरत्व सम्भवात्, तत्सूत्राणां नैयायिकाभिमतमात्रनिरासपरत्वाच्चेति न शंक्यम् लघु नैकेनैव प्रघट्टके नाऽविशेषेण व्यासगौतममतनिराससिद्धौ पुनर्विशिष्य व्यासमतनिराकरणस्याऽनावश्यकत्वात् । किञ्च, पारिशेषिकप्रमाणस्याऽ मानेऽन्तर्भूतत्वेन वैयासिकमीमांसायां भेदव्यपदेशाच्चाऽन्यः, नेतरोऽनु पत्ते रित्यादिना केवलाद्वैतविरोधस्य बहोः प्रत्यक्षतः परिदृश्यमानत्वे प्रत्यक्षविरुद्धस्य पारिशेषिकप्रमाणस्य ग्रहणाऽनौचित्याच्च ॥

किञ्च, केवलाद्वैतवादित्वेन बादरिमुने स्सुप्रसिद्धत्वेनाऽन्यस्य वादिनोऽभावादितहेतो राभासरूपतया पारिशेषिकप्रमाणस्यैवाऽसिद्ध त्वाच्च । वेदव्यासस्यापि सविशेषवादित्वाऽविशेषेण तन्मतस्याऽनिराकार्य त्वावगमेन तन्मतानिराकरणंन कपिलादिनिराक्रियमाणकेवलाद्वैतस्य व्यास तात्पर्यविषयत्वनिश्चयाऽयोगाच्च ॥

ननु, श्रीशङ्करश्रीकण्ठरामानुजमध्वभाष्येषु, अभाव म्बादरिराह ह्येवमिति सूत्रव्याख्याने मुक्तिदशाया न्देहेन्द्रियाद्यभावमात्रस्यैव बाद यंभिमतत्वप्रतिपादनेन केवलाद्वैतस्याऽप्रतिपादनात् । नहि शरीराभाव प्रतिपादनमात्रेणाऽभेद स्सिध्यति, तथासति नैयायिकादीनामपि मुक्ति दशाया न्तदीयग्रन्थेषु शरीराभावप्रतिपादनेन जीवब्रह्मणो रैक्याभ्युपगम

पत्तेः । तथाच, तत्प्रति कपिलोक्तदूषण मसमञ्जसमेवेति व्यासतात्पर्य निर्णये बादरि नकेवलाद्वैतवादीति प्रसाधित मितिचेन्न, अभाव म्बादरि रितिसूत्रमात्रेण तस्य केवलाद्वैतवादित्वाऽनिष्पत्तावपि व्यासेन सू.॥ कार्य म्बादरिरिति पूर्वपक्षतया गृहीतं सूत्रमेव सिद्धान्ततया गृहीतवद्भिः श्रीशङ्करा चार्यैरेव बादरेः केवलाद्वैतवादित्वेन स्फुटीकृतत्वात् । सू.॥ कार्य म्बादरि रस्यगत्युपपत्ते रित्यनेन गतेः कार्यब्रह्ममात्रप्रापकत्वाद्याशयेन, एतादृश भावानां केवलद्वैतवाद्यन्तोऽसम्भवेन बादरेः केवलाद्वैतवादित्वनिर्णाय कत्वाऽव्यभिचारात् । एवं व्यासे बादरिरेव केवलाद्वैतवादीति सूत्रे रतिस्फुटं निर्धारयत्यपि भवानेव तद्वादीति निर्बन्धस्य हासावहत्वाच्च ॥

नच, प्रसिद्धतरस्यैव महर्षेः कपिलादिप्रतिवादित्वाऽवश्यम्भावेन बादरे रप्रसिद्धत्वेन तस्य वादितया परिग्रहण मसमञ्जस मिति वाच्यम् । अनुवृत्ते बादरिः, अभावं बादरि राहह्येवम्, कार्यं म्बादरिरित्यादिना वेदव्यासेन बहुवार न्तन्मताऽनुवादेन तस्य प्रसिद्धतमत्वाऽवगमात् । एवञ्च दुर्बलेन, तत्रा प्यसिद्धेन पारिशेषिकप्रमाणेन व्यासस्य केवलाद्वैतवादित्व मवधार्य तन्मूला त्तस्य केवलाद्वैते तात्पर्यनिर्णिनीषाया भ्रान्तिमूलत्वमेवे त्यावेदितम् ॥

किञ्च, अत्रेद ञ्चोद्यम्, भवताऽभ्यूहितं यत्कपिलस्य व्यासमत निरासकत्वं तद्व्यासेन परिज्ञात न्नवेति, यदि तेन विदित न्तर्हि स्वमत ङ्केवलाद्वैतं कपिलेनामूलाग्रतो निराकृतमिति विजानतापि स्वीयाया म्मीमां सायां कपिलसूत्रनिराकृतस्वमतप्रतिष्ठापनार्थं किमिति न व्यापृतमितिच। नच-नतु सात्यवतेयः कपिलसूत्राणि नाऽद्राक्षीदिति युक्तं वक्तुम् । यद्य

द्राक्षीत् तर्हि, सांख्यशास्त्रप्रथमाध्याये, नाऽविद्यातोऽप्यवस्तुना बन्धायोगात्
वस्तुत्वे सिद्धान्तहानिः, विजातीयद्वैतापत्तिश्च, विरुद्धोभयरूपा चेत्
न तादृक्पदार्थाऽप्रतीतेः, तत्रैव, उपाधिभेदेऽप्येकस्य नानायोग आकाशस्य
घटादिभिः उपाधि भिद्यते न तु तद्वान् । एव मेकत्वेन परिवर्तमानस्य न
विरुद्धधर्माऽध्यासः, अन्यधर्मत्वेपि नारोपा तत्सिद्धि रेकत्वात् । नाऽद्वैतश्रुति
विरोधो जातिपरत्वात्, विदितबन्धकारणस्य दृष्ट्या तद्रूपत्वम्, नाऽन्धादृष्ट्या
चक्षुष्मता मनुपलम्भः, वामदेवादि मुक्तो नाऽद्वैतम्, अनादा वद्य
तदभावा द्भविष्यतोऽप्येवम्, इदानीमिव सर्वत्र नात्यन्तोच्छेदः, प
माध्याये, नाविद्याशक्तियोगो निस्सङ्गस्य, तद्योगे तत्सिद्धा वन्योन्याश्र
यत्वम्, न बीजाङ्कुरवत्सादिसंसारश्रुतेः, विद्यातोऽन्यत्वे ब्रह्मबाधप्रसक्ते
अबाधे नैष्फल्यम्, अविद्याबाध्यत्वे जगतोऽप्येवम्, तद्रूपत्वे सादित्वम्
तत्रैव नानिर्वचनीयस्य तदभावात्, तत्रैव, नाद्वैत मात्मनो लिङ्गा त्तद्भे
प्रतीतेः, नानात्मनापि प्रत्यक्षबाधात्, नोभाभ्या न्तेनैव, अन्यपरत्व
मविवेकानाम्, नात्मविद्या नोभयम् जगदुपादानकारणम् निस्सङ्गत्वात्
नैकस्यानन्दचिद्रूपत्वे द्वयो र्भेदात्, तत्रैव नानन्दाभिव्यक्ति र्मुक्ति र्नि
र्मत्वात् । षष्ठाध्याये उपाधिश्चे त्तत्सिद्धौ पुनर्द्वैतम्, द्वाभ्यामपि
प्रमाणविरोधा त्पूर्व मुत्तरञ्च साधकाभावात्, प्रकाशत स्तत्सिद्धौ
कर्मकर्तृविरोधः, जडव्यावृत्तो जड म्प्रकाशयति चिद्रूपः, न श्रुतिविरोधो
रागिणां वैराग्याय तत्सिद्धेः, जगत्सत्यत्व मदुष्टकारणजन्यत्वा द्बाधका
भावात् । एतेषु कपिलसूत्रेषु केवलाद्वैतनिराकरण स्याऽतिस्फुटत्व
दृश्यमानत्वेन,

एवम्, कपिलनिराकृतं स्वीय केवलाद्वैत म्प्रतिष्ठापितु मशक्नुवानएव ईक्षते नांशब्दम् । रचनानुपपत्तेश्च नाऽनुमानमित्यादिना कापिलम्मत न्निराकुर्वन् सात्यवतेयो वैतण्डिकमूर्धन्यता मवलम्ब्येत्येव किल भवता निर्णेतव्य महो ! तर्हि भवदीय स्तात्पर्यनिर्णयोऽवश्य मुपेया दुर्णयता मेवं स्वमतं व्यासे नोरीकारयितु मुद्यम्य तस्यवैतण्डिकत्वादिदोषारोपणतो दूरीकरणमेव युक्त म्भवता मित्युद्बोधयामः ॥

तस्मा त्केवलाद्वैतं व्यासतात्पर्यविषयमिति शङ्कितुमपि भवति नास्पद न्ततएव श्रुत्याशयविधुरमितियुक्तम् । अतो न वेदान्तसंज्ञा मर्हति केवलाद्वैतमिति शिवाद्वैतएव व्यासतात्पर्यविषयइतिच सिद्धम् ॥

अथ बहुषु ग्रन्थान्तरेषु केवलाद्वैतमेव वेदान्त ंज्ञ योदाहृतमिति तस्यैव वेदान्तसंज्ञकत्व न्तत स्तस्यैव व्यासतात्पर्यविषयत्व मित्यादिना यो विस्तारितो ग्रन्थ स्तेनापि न स्वेष्टसिद्धिः वेदान्तैकदेशिमतत्वेनवा, घृतकोशातकीन्यायेनवा तस्य तत्संज्ञया व्यवहारोपपत्तेः, अन्यथा प्रकृत ग्रन्थेषु निरूपितस्य केवलाद्वैतगतश्रुतिसूत्रविरोधस्य दुरुद्धरत्वात् ॥

ननु, केवलाद्वैतनिराकरणपरेष्वपि केवलाद्वैतस्य वेदान्तसंज्ञया व्यवहारो दृश्यते तस्मा त्तस्य व्यवहारस्य वेदान्तैकदेशिमतत्वादिना न गौणत्वाभ्युपगमो युज्यते इतिचेत्, यद्येवं तर्हि केवलाद्वैतसाधकेषु तस्य वेदान्तसंज्ञाव्यवहारस्य अभिमानमूलत्वेनेति, केवलाद्वैतनिराकरण परेषु वेदान्तकत्वरूपार्थवत्वेनचेति च तादृशव्यवहारस्य युक्ततरत्वादिति युज्यतएव । केवलाद्वैतगत श्श्रुतिविरोधो वेदपथे श्रुतिसूत्रविरोधो वेदा न्तार्थपरिष्कारेच विस्तृतइति ततएवाऽनुसन्धेय इत्यलम् ॥

किंच, केवलाद्वैतस्य बहुमहर्षिनिराकृतत्वा द्वेदान्तसंज्ञक ममुख्यमिति। मंत्रोपनिषदि य एको जालवा नीशत ईशनीभिः परमश भिः, मायिनन्तु महेश्वरम् , शिवएव केवल इत्यादिना श्रुत्यन्तनिरूपि शिवाद्वैतस्य । श्रु ॥ प्रोवाच सम्यगृषिसंघजुष्ठमिति सकलमहर्षिप्र विषयत्वाज्ञानात् वेदान्तसंज्ञकत्वं मुख्यमितिच सिद्धम् ॥ इह यद बहुमहर्षिनिराकृतस्य केवलाद्वैतस्य निराकरणं न युज्यते । तथापि, त बहुतरविपश्चिद्भरविरचितविविधनिबन्ध बाहुल्यकृतबहुजनविश्वासयावत वेदान्तयाथार्थ्यप्रचिकटयिषया यावत्परमतं न निराकृतं तावत् स्वमत प्रतिष्ठितं भवतीति न्यायेनच संप्राप्त मिति नाऽसांप्रतम् ॥

## अद्वैतशास्त्रप्रतिष्ठापनकारणं

अव ॥ ननु, यद्येवं तर्हि, श्रीशङ्कराचार्याः प्रस्थानत्रयभा निर्माणरूपेण महता प्रयत्नेन किमिति केवलाद्वैत म्प्रत्यतिष्ठिप मीमांसाविरुद्धसिद्धान्तप्रतिष्ठापने तेषा मैहिक मामुष्मिकंवा प्रयो मुपलभ्यते इत्याशंक्य तत्र कारणमाह ॥ यथा—

मू॥ बौद्धप्राय मवेक्ष्य मर्त्यनिचयं लोकस्य चित्ते क्रमात्
विश्वास म्परमेश्वरे जनयितुं सश्चिन्त्य सम्य क्तदा ।
आस्तिक्य म्प्रथमं समाकलयितुं सामान्य मेतन्मतं
प्रस्थानत्रयसम्मत म्प्रवदता नून म्प्रतिष्ठापितम् ॥

बौद्धेति ॥ अत्रेद म्बोध्यम्, यद्यपि श्रीशङ्कराचार्याणा म्प्राज्ञतायां लो नुजिघृक्षुतायां वा न विद्यतएव संशयितव्य मण्वपि। तथापि, लोकाऽ दृक्ष्यैव तदानी न्तादृशमतनिर्माण मावश्यक मासीदिति ॥ तथाच,

किल लोकोऽय म्बौद्धप्रायतया कञ्चित्काल मवर्तिष्टेति विदितमेव, तथा नास्ति कश्चि दीश्वरः, जग देतन्मिथ्येति दृढविश्वासवता श्चेतस्सु निरव धिककल्याणगुणः परमेश्वरो विद्यतइति तस्मि न्सम्यगुपासिते तदनुग्रहेण विमुक्ति र्लभ्यतइतिच हठात् विश्वासजनन मशक्यमिति मत्वा, मूर्खछन्दानुरोधेनेति न्यायेन नामरूपरहिततया शून्यकल्प ङ्किमपि वस्तु विद्यतइति बोधेन न किञ्चिदप्यस्तीति भाव मपनीय 'यथाकथम प्यास्तिकताजनन मावश्यक म्पुरस्तादिति निश्चित्य ब्रह्मा स्तित्व मुपदिशन्त स्तत स्सामान्यतोपि न तदस्तीति प्रत्यवतिष्ठत स्समा लोक्य, अहम प्यस्मीत्यर्थे लोके कस्याऽस्ति संशयः पुंसः । तत्रापि संशयश्चे त्संशयिता यस्स एव भवसि त्वमिति ब्रह्मणः प्रत्यगभिन्नत्व बोधेन आत्मास्तित्वविश्वासेनैव ब्रह्मास्तित्वविश्वास न्दृढीकुर्वन्तश्च, तात्का लिकजनाभिमतशून्यकल्पनिर्विशेषब्रह्मवाद जगन्मिथ्यात्वभेदाऽनिर्वचनीयत्व केवलाभेदादिविशेषै स्तदीयमतसदृक्षमतप्रचारेणाऽऽदौ तेषा मास्तिक्य, मस्मदीयमतमेव ब्रह्ममीमांसाया म्प्रतिपाद्यमिति प्ररोचनेन प्रथम म्मीमां साप्रामाण्यविश्वासञ्च सम्पाद्य यद्यपि निर्विशेष म्ब्रह्मैव परमार्थसत्य न्तथापि मायाकल्पिततया व्यवहारसत्यं सगुणं ब्रह्मापि केषुचि दधिकार णेषु प्रतिपाद्यते केषाञ्चि दधिकारिणाङ्कृते तथापि तस्य मायाकल्पिततया नाद्वैतबाधइति मायावादबलेन ता न्यथाकथञ्चि च्छून्याद्वैता त्प्रच्याव्य ब्रह्माद्वैतमतप्रवेशने सम्पादिते तत स्ते कालक्रमेण मीमांसातात्पर्यं सम्य ग्विमृश्य सविशेषमेव ब्रह्म निर्धार्य तदुपास्यच तदनुग्रहेण मुक्तबन्धना भवेयु रन्यथा संसारान्धकूपा न्नोत्तिष्ठेयुरिति तात्कालिकलोकाऽनुजिघृक्ष

येव तात्कालिकजनमनोज्ञं बादरिमुन्युपज्ञंच समय मवतार्य प्रकृति
ध्यासतद्विवेकहेतुबन्धमोक्षावपि तन्त्रा त्कापिला त्परिगृह्य तत्र प्रा
प्रतिष्ठाप्यच, संस्थापितं मतंप्रस्थानत्रयभाष्यरचनाप्रयासेन
सर्वज्ञकल्पैः केवलाद्वैतमूलाचार्यै रि त्यवगम्यते, अतएव तदाश्रय
नाना विमताः केचि त्प्रच्छन्नबौद्धमिति शुद्धाद्वैतं व्यवजहुः । विज्ञान
केवलाद्वैतयो र्विशेषोस्तीति प्रतिव्याजहुश्च कतिचि दद्वैतपरा स्सुधिय
विदितमेव । तस्मा तात्कालिकलोकसमुद्दिधीर्षयैव प्रतिष्ठापित मा
रिति युक्त मुत्पश्यामः ॥

अथ॥ तादृशमतनिर्माणे कारणान्तरम प्यस्तीति निर्दि
यथा—

मू॥ शैवादी न्विमता न्नितान्तकलहाक्रान्ता न्निरीक्ष्याऽन्ततो
वादेभ्यो विरमय्य सङ्कलयितु न्ता नैकमत्ये स्थिरम् ।
सङ्घीभाव मनाकुलं रचयितुं सम्यक प्रभिन्नाध्वनां
विस्फूर्जन्मतभेदभेदनपरं नव्य म्मत क्लृप्तम् ॥
शैवेति ॥ इद मि हानुसन्धेयम्—

मू॥ शैवश्च वैष्णवं शाक्तं सौरं वैनायक न्तथा ।
स्कान्दश्च भक्तिमार्गस्य दर्शनानि षडेवहीतिवचनात्
दर्शनानि ष डनादिसिद्धानीति ॥ तत्तद्दर्शनप्रवणाना
कलहयोगो दुरन्तइतिच विदितमेव । श्रीमद्भि श्शङ्कराचार्यै स्स्व
काले षडपि तत्तन्मतस्था विजि त्यैकसङ्घीकृताइत्यानन्दगिरिणा
शङ्करविजये व्यलेखि । बृहच्छंकरविजयादप्ययमर्थोवगम्यते । एवञ्च

त्विकान् षडपि तत्तन्मतसङ्घीया ननारतकलहपरा नवलोक्य-भोभोजनाः किमिति तत्तद्देवतानामरूपविषये वृथाविवदथः नामरूपे कल्पितएव, तत्रहि नामरूपरहितं किञ्चिद्वस्तु निरस्तभेदम्, तत शिवकेशवादि पारम्याभिमानं विसृज्य सङ्घीभावेन प्रवर्ततेति प्रबोध्य कौमारमतस्थानां लुप्तप्रायतया सङ्घीभूता न्पञ्चमतस्थान् पुनर प्युपास्यदेवताविषये विवद माना नुद्दिश्य आदित्यादिपञ्चायतन मभेदभावे नाऽऽर्चयतेति सम्बोध्य भूयोपि पूर्ववासनावशा दीश्वरादिपारम्यसक्तचित्ता नवलोक्य स्वस्वाऽभि मता न्देवता म्प्राधान्येन मध्ये निधाय, तदतिरिक्तदेवताचतुष्टय न्तस्याः परितो निक्षिप्य, शङ्करगदे, नाशङ्करदे, इत्यादिकल्पितसूत्राऽरोपेन समाराधयतेतिच तेषां सामरस्यं प्रकल्प्य, एव म्मतभेदनिर्मूलनपर मभेदसञ्ज्ञित म्मतं प्रत्यतिष्ठिपन्निति विज्ञायते, मतस्वभावा च्चारित्रानु भवाच्चे त्यल मधिकेन। एवं सर्वमतसङ्घसमावेशनफलं सङ्घबलं तन्मूलं विद्वद्बल न्तत्सिद्धञ्च ग्रन्थबलं संस्करणवशा दधिगतं सूतसंहितादिरूपम्, निर्माणवशा दुपपन्न मध्यात्मवासिष्ठरामायणादिकरूपञ्चेति सर्व मुपपन्नम्॥

अधुना केवलाऽद्वैताचार्यवशवर्तिना म्पुष्पगिरिविरूपाक्षादिमठाना म्पुरा शिवाद्वैताचार्यस्वामिकता मावेदयन्ति चारित्रकनिदर्शनान्यपोम मेवार्थं निर्धारयन्ति, नच, नव्यंमतं कल्पितमित्ययुक्तं केवलाद्वैतस्य ततः प्रागेव सिद्धत्वादिति शंक्यम्, तस्य मतस्य शैवादिमतेभ्यः प्राक्सिद्धत्वे तत्रोपास्यदेवताया व्यवस्थिताया स्सम्भाव्यत्वेन तदभा वात् शैवादिमतसिद्धशिवविष्ण्वादिदेवतानामेव परिग्रहेण तस्य तदर्वाचीन त्वाऽवगमात्। नापि, शैवादिमतभेदविनोदनार्थमेव केवलाद्वैतं कल्पितमित्य

समंजसम् केवलाद्वैतस्यैव श्रुतिसूत्रसम्मतत्वेन तद्विरोधादेव शैवादि मतानां निर्धूतत्वादितिचोद्यम्, प्रकृते निरूपितस्य केवलाद्वैतगतस्य सूत्रविरोधस्य वेदपथे निरूपितस्य तद्गतस्य श्रुतिविरोधस्य वेदान्तार्थ परिष्कारे निर्धारितस्य केवलाद्वैतविषयसकलार्थगतश्रुतिसूत्रविरोधस्य च दुरुद्धरत्वात्। तस्मात् शैवादिमतभेदपरिजिहीर्षयैव केवलाद्वैतं परिकल्पि माचार्यैरिति सिद्धम् ॥

एवञ्च, केषाञ्चिद्बौद्धप्रायतया केषाञ्चित् शैवादिषड्दर्शनप्रवणत च तादात्विकजनानां वर्तमानत्वे नोक्तरीत्या सर्वजनसम्मतं मतं प्र यामासुरिति तदाचरितं तात्कालिकलोकोपयुक्ततया युक्तमेवेत्यलं बहुना

नागलिङ्गकृतौ व्यासपथे ब्रह्मपथंगते ।
केवलाद्वैतमार्गस्य प्रतिषेध इतीरितः ॥

---

## रामानुजपथप्रतिषेधः

अत्र ॥ नन्वेव केवलाद्वैतपथस्य व्यासपथत्वप्रतिषेधेन विशिष्टाद्वैतस्यैव व्यासपथत्वसिद्धावपि न शिवाद्वैतस्य तत्वं सिध्यति, श्रीभाष्ये विशिष्टकेशवाद्वैतस्यैव व्याससम्मतत्वनिर्धारणा दित्याशंक्य श्रीभाष्यनिबद्धस्य सविशेषाऽद्वैतस्य श्रीकण्ठभाष्यार्थचौर्यलब्धतयाऽनुपादेयतां निरूपयति ॥ यथा—

मू॥ शुद्धाऽद्वैतविधूनने बुधमणे संक्रीडमानो भृशं
वैशिष्ट्यप्रतिपालने पटुतरं वीरायसेचे त्पुनः ।
श्रीकण्ठीय मपाहर न्निजगुरो र्नामापि न व्याहर
न्सिद्धार्थत्व महो यियासु रवश श्चोरायसे त त्कुतः ॥ १

शुद्धेति, इदमिह संप्रधार्यम् ॥ यद्यपि श्रीभाष्ये तत्कृता शुद्धाद्वैतं विखण्ड्य विशिष्टाद्वैतस्थापने महावीरवदाचरितमेव, तथापि श्रीकण्ठयोगिना स्वकृतौ निबद्धं विशिष्टाऽद्वैत मपहृत्य तत्सिद्धान्तप्रथमगुरो स्तस्य नामा प्यनुद्घाट्यच कृतकृत्यताऽभिनयनं न युज्यतइति ॥

नच, श्रीभाष्यनिर्माणकाले श्रीकण्ठभाष्यस्यैवाऽविद्यमानत्वेन श्रीभाष्यकर्तु स्तदवलोकनं न सम्भवतीति शंक्यम्, श्रीभाष्यकृता केवलाद्वैतभाष्यार्थस्य निराकृतत्वेन शुद्धाद्वैतभाष्यकृताच श्रीकण्ठभाष्यगत सविशेषत्वनिराकरणपूर्वकं निजभाष्ये निर्विशेषत्वस्य निर्धारणेन श्रीकण्ठीय भाष्यस्य शुद्धाद्वैतभाष्यादपि प्राचीनत्वाऽवगमेन श्रीभाष्यस्य केवलाद्वैत भाष्याद प्यर्वाचीनत्वेन श्रीभाष्यकर्तुः केवलाद्वैतादिसकलभाष्यप्राचीनभूत श्रीकण्ठभाष्याऽनवलोकनस्याऽसम्भावितत्वात् । तस्मात् श्रीकण्ठभाष्यगतं

विशिष्टाद्वैत मपहृ त्याऽन्तराळे समागतं निर्विशेपवादं निर्मूल्यच वि
ष्टस्य ब्रह्मणः पाञ्चरात्रमात्रसिद्धं नारायणनामकरणं विधायाऽतिप्राचं
तया निजभाष्यमूलभूतमपि खिलीभूतं श्रीकण्ठभाष्य क्कथमपि न प्र
टित म्भवेदिति श्रीभाष्यकृता समवलम्बितं चोरकृत्यं न विदुप श्शोर
मावहतीति हृदयम् ॥

ननु, श्रीभाष्यकृता सविशेपवादो न श्रीकण्ठभाष्या दुद्धृ
किन्तु बोधायनमुनिनिगदिता द्वृत्तेरेव, अतएव श्रीभाष्ये भगवद्बोधाय
कृतां विस्तीर्णां सूत्रवृत्ति म्पूर्वाचार्या स्सञ्चिक्षिपुः, तन्मताऽनुसा
सूत्राऽक्षराणि व्याख्यायन्तइत्युक्त मितिचे, न्न, बोधायनवृत्तेरेव निज
गृहीतविशिष्टाद्वैतमूलभूतत्वे तस्यावा महर्पिवरसमनुगृहीताया वि
णादिना प्रचारयितव्यत्वेन तदकरणेन स्वस्यैव विशिष्टाद्वैतमूलाचार्य
कामनाविपयत्वाऽवगमेन प्राचीनग्रन्थेभ्य स्तत्सारं सङ्गृह्य मूलग्रन्थाऽप्र
शनरूपचौर्यस्य तदा प्यनिवारणात् ॥

किञ्च, भगवतो बोधायनस्य महान्यासरुद्रयागकल्पादिकृति
र्महाशैवत्वाऽवगमेन तत्कृते श्शिवपारम्यनिबद्धत्वाऽवश्यम्भावितया त
काशने पाञ्चरात्रसमयसमुद्धरणरूपनिजमनोरथो न सिध्येदिति ताम
नाममात्रावशेपिता कृत्वा तत स्सविशेपवादमात्रपरिग्रहेण ,श्रीभाष्यकृ
चौर्यस्य दुरुद्धरत्वाच्च । तथाच, बोधायनमुने श्शैवत्वं सुविदितम
अतएव ॥ तेन श्रीरुद्रयागकल्पोऽनन्तैश्रीरुद्रपारम्यपरै र्मन्त्रै र्व्यरच
तस्य प्रतिद्वन्द्वितया विष्णुयागकल्पनिर्माणबद्धादरेण मुनिना वि
निगमेपु विष्णुपारम्यप्रतिपादनपरमन्त्राणा मभावेन श्रु ॥ किमिदं वि

सुमति म्भजामहे य दन्यरूप स्समिधे बभूव । इतिमन्त्रोऽर्थविवरणे हासावहोपि विष्णुनामघटितत्वमात्रेण सङ्गृहीतः ॥

तथाहि, पुरा केनचि च्छिवभक्तेन वसिष्ठशिष्येण रक्षसा बहु वार म्पराजितो महाविष्णु स्तज्जयार्थ मनुचिन्त्य स्वयं शिवरूपधरो योद्धु न्तदा जुहाव । तदा बुद्धिहीन न्तद्रक्ष स्त ङ्केवलंशिव म्मत्वा, अहो शिवदत्तवरप्रसादेन सर्वत्र विजयी स न्कथ म्भगवता युद्ध्वा शिवद्रोह ङ्कुर्यामि त्यसू न्स्वय महासीत् । तत स्तच्चरितं विज्ञाय भगवा न्वसिष्ठो विष्णु मुद्दिश्य, हेविष्णो, भवान् तद्रक्षो निजरूपेण जेतु मशक्नुवान एवाऽन्यरूपधरस्सन् युद्धाय समागतोसि तव सुमति सुबुद्धि कपटोपाय कौशलमिति हृदयम् । तदय म्मन्त्रोऽर्थविवरणे व्याजस्तुतिरूपोऽवग म्यते । श्रुतिषु हरिपारम्यपरमन्त्राणा मलाभादेव वैष्णवेषु सर्वेष्वपि संस्का रेषु पाञ्चरात्रे प्रायशोऽयमेव मन्त्रः परिगृह्यते ॥

एवं प्रतद्विष्णुस्तपते वीर्यायेति मन्त्रोपि तादृशएव पांचरात्रे वैखानसेच तन्त्रे परिगृह्यते । तत एव 'शंभो इति परमेश्वराह्वानविषय एवच मन्त्रो विष्वक्सेनावाहने वैखानसे परिगृह्यते । अर्थविवरणे सुधियो हसेयुरितीम मनुदाहृत्यैव श्रीभाष्यकृता दिव्यो देवएको नारायणइति सौबालवाक्यमेव प्रत्यधिकरण मुदाह्रियते । श्रीकंठोयेतु परमेश्वरपारम्य प्रतिपादका मन्त्रा स्सहस्रशो विशिष्य प्रत्यधिकरण मुदाह्रियन्तइतिच विदितमेवहि तद्विदाम् । तस्मात् श्रीभाष्यकर्तु श्चौर्य मवार्यमिति सिद्धम् ॥

अत्र॥ परैः श्रीकण्ठभाष्यादेव शिवपारम्यवर्जं शास्त्रार्थ स्सर्वोपि सङ्गृहीतइति विशदयति ॥ यथा—

मू॥ श्रीकण्ठीयकृतिं न वेद यदिवा तर्हि प्रशस्यो भवा
नामूलाग्र मिद ङ्कथन्वनुसरे त्तस्मा न्न सम्भाव्यते।
एकत्रोक्तमिहाऽपरत्र कथय न्नर्थविपर्यासयेः
किं स्या न्नाल मिद ङ्कृतिं विमृशता श्चौर्यस्य विख्यापने॥

श्रीकण्ठीयेति॥ इदमिहाऽवधेयम्, श्रीकण्ठरामानुजभाष्ययोः परिशीलने पूर्वोत्तरमीमांसैकशास्त्रत्वकर्मज्ञानसमुच्चय सविशेषत्वादिभि स्सर्वैर प्यंशै स्सिद्धान्त एकरूपइति विज्ञायते। न केवलं स्सिद्धान्त स्यैकरूप्यमेव चौर्यप्रकाशक ङ्किन्तु प्रायश स्तत्तदधिकरणाऽर्थो प्यामूलाग्र मैकरूप्य मजह दुक्तार्थं साधयत्येवेति॥

नच, श्रीभाष्यादेव तदोयोऽर्थ श्श्रीकण्ठेनाऽपहृतइति शंक्यम्, श्रीकण्ठभाष्यपरमप्राचीनत्वस्य सर्वसम्प्रतिपन्नत्वात्॥

अत्र॥ ननु, यद्यपि श्रीभाष्यकर्त्रा सविशेषवादः श्रीकण्ठभाष्या देवाऽपहियता न्तथापि श्रीकण्ठभाष्यगतस्य शिवपारम्यस्य मीमांसाविरु द्धत्वेन तन्निरस्य मीमांसाया नारायणपरत्वप्रतिपादनेन युक्तमेवाऽऽचरितमि त्याशंक्य यदि तेन मीमांसाया नारायणपरत्व म्प्रसाधित न्तर्हि युज्येत विमर्शने तदेव न सिध्यतीत्याह॥ यथा—

मू॥ विष्णौ शास्त्रसमन्वयन्नु कुरुते क स्त्वा न्निरोद्धुं क्षमः
दद्या च्छास्त्र मिहाऽन्तर न्तव यदि प्रेक्षामहे त्वत्कृतिम्।
कस्मा त्त्व म्प्रमिताऽह्वयाऽऽधिकरणे मौनी भव न्नत्यगा
श्छिद्रे वृश्चिकवेधनं यदिभवे त्किन्नु ब्रुवे त्तस्करः॥

विष्णाविति ॥ यद्यपि श्रीभाष्यकृता ब्रह्ममीमांसा नारायणपरत्वेन समन्वेतु मुद्यता, तथापि नतथा समन्विता। तथाहि, शब्दादेव प्रमित इत्यधिकरणे, श्रीभाष्ये--कठवल्लीगतम्, अङ्गुष्ठमात्रः पुरुषइत्यादिवाक्यं विषयतया परिगृह्य किमय मङ्गुष्ठमात्रप्रमितः प्रत्यगात्मा उत परमात्माइति सन्दिह्य जीवइति पूर्वपक्ष कृत्वा, शब्दादेव प्रमितः, अङ्गुष्ठप्रमितः पर मात्मा कुतः ईशानो भूतभव्यस्येतिशब्दादेव। नच भूतभव्यस्य सर्व स्येशि तृत्व कर्मपरवशस्य जीव स्योपपद्यत इति सिद्धान्तितम् ॥

अत्र-शब्दशब्दे नेशानइत्यभिधानश्रुतेरेव विवक्षितत्वेन ईशानो भूतभव्यस्येति वाक्यग्रहण मयुक्तम्। वाक्यस्य अङ्गुष्ठप्रमितत्वलिङ्गा दुर्बलत्वेन तेन परमात्मपरत्वनिर्धारण स्याऽसमञ्जसत्वात्। अतएव-श्रुत प्रकाशिकायाम्—

ननु, भूतभव्य स्येशानइतिवाक्य न्तच प्रमितत्वलिङ्गा दुर्बलम्, नैवम्। ईशानशब्दस्यैव शब्दशब्देन विवक्षितत्वादिति ॥

नच, तत्र भूतभव्यस्येति यौगिकाऽर्थप्रतिसम्बन्ध्युपादानेन रूढ्यु न्मेषो नाऽस्तीति वाच्यम्, तत्प्रतिसम्बन्ध्युपादानेपि रूढिशब्दश्रवण प्रयुक्तरूढ्युन्मेषस्याऽवार्यत्वात्, यौगिकाऽर्थसम्बन्धिनः कस्यचि त्पदान्त रेणाऽनुपादानएव समुदायशक्त्युन्मेषइति व्युत्पत्तिसिद्धनियमाऽभावाच्च। न न्वीशानपद मैश्वर्यगुणयोगेन साधारणम्, सत्यम्, योगेन साधारण्येपि रूढ्या त दीश्वराऽसाधारणम्, ईश्वर श्शर्व ईशानः, ईशान श्शशिशेखरः, पशुपति श्शूली शिवश्शङ्कर इत्याद्यभिधानकोशस्मृतिपरम्परया असाधार

ण्येन तत्र तस्य योगरूढेरपि सिद्धेः केवलयोगाच्च शक्तिद्वयाऽनुग्रहल
योगरूढेः प्रबलत्वात् ॥

न न्वीशानः प्राणदः प्राणइति नामसहस्रमध्ये परिगणन मीश
शब्दस्य विष्णुवाचकत्व मप्यवगमयति, तदेव वेदोपबृंहणार्थे महाभ
पठितत्वा दन्तरङ्ग मभिधानकोशस्मृतिभ्यो वेदाऽर्थनिर्णयइति ततो
विष्णुपरत्वमेव वक्तुं युक्त मितिचे न्न। स्तुव न्नामसहस्रेणेत्युपक्रमाऽनुस
सर्वात्मतया स्तोतुम्प्रवृत्ते विश्वंविष्णुरित्यादौ सार्वात्म्याऽभिप्रायेण दे
न्तरनाम्नामपि बहूना म्परिगणनदर्शनेन तत स्तेषां शक्तिसिद्ध्ययो
अन्यथा, भारतलैङ्गादित्यपुराणादिपठितशिवनामसहस्राऽनन्तर्गतस्य वि
नाम्नोऽभावात्। हरिवंशे कैलासयात्रायाम्, नामानि तव गोविन्द
लोके महान्तिच। तान्येव मम नामानि नात्र कार्या विचारणेति
म्प्रति शिववचनेन विष्णुनाम्ना मन्येषाञ्च सारभूतानां शिवनामत्वसिद्
अभिधानश्रुत्या क्वचिदपि विष्णुपरत्वनिर्णयो न स्यात्। तत स्तुत्य
गन्धरहित लोकवेदसाधारणनामपरिगणनैदम्पर्यप्रवृत्ताऽभिधानकोश
रेव प्रबलत्वेन नामत्वे प्रमाणमि तीशानशब्दस्य शिववाचित्वव्यवस्थि

किञ्च, प्रकृताऽधिकरणे, अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाऽधूम
ईशानो भूतभव्यस्येति मन्त्रस्य अङ्गुष्ठमात्रइतिपरिमितपरिमाणत्व
ज्जीवपरत्वमाशङ्क्य ईशानइ त्यभिधानरूपश्रुतिरूपा च्छब्दा त्परमात्म
निर्णये नेशानशब्दस्य शिवाऽसाधारणत्वं स्फुटीकृतम्। तस्य केवल
कत्वे परमात्माऽसाधारणशब्दाऽभावा द्भूतभव्येशितृत्वलिङ्गादेव निर्ण
मिति शब्दादेवेति सूत्र मसङ्गतमेव स्यात् ॥

अपिच, अत्र, यद्यपि भूतभव्येशितृत्वलिङ्गा दङ्गुष्ठप्रमितः पर मात्मैवेति सिध्यति, तथापि लिङ्गंहि वाक्याऽर्थप्रतिपत्त्यनन्तरभावित्वेन विलम्बोपस्थितिकत्वा तिष्ठतु, ईशानशब्दस्य परमात्माऽसाधारणाऽभिधान श्रुतिरूपत्वेन तादृशशब्दश्रवणमात्रेणैवाऽङ्गुष्ठमात्रप्रमितः परमेश्वरएवेति सिध्यतीत्यर्थविशेष एव कारेण विवक्षित स्सूत्रकृता, तस्मात् ईशान शब्दस्य रूढिशब्दता मनङ्गीकुर्वाणानाम्पक्षे शब्दादेवेति सूत्रगत म्पद द्वयमपि नैरर्थक्य मश्नुवीतेति तेन ब्रह्ममीमांसा परेषां प्रतिकूलेतिच, विदितम् ॥

न न्वेकस्याऽस्याधिकरणस्य प्रातिकूल्ये पीतरेषां सर्वेषामपि नारायणपरत्वसाधकतया मीमांसाऽस्मदनुकूलै वेति चे न्न, परमेश्वराऽभिधान श्रुते रस्मिन्नेवाऽधिकरणे विशिष्य ब्रह्मनिर्धारकतया निबद्धत्वेनाऽन्यत्र कुत्रा प्यभिधानश्रुत्या ब्रह्मणोऽनिर्धारितत्वेनच सामान्येन ब्रह्मबोधकानां सर्वेषाम प्यधिकरणानां छागपशुन्यायेन विशिष्य ब्रह्मनिर्णायकप्रमिताऽधि करणैकार्थ्येन ईशानपदाभिहिते ब्रह्मणि समन्वयस्य न्याय्यत्वेनाऽन्येषा न्देवतान्तरपरत्वनिर्णिनीषाया दुराशारूपत्वाऽवगमात् । तस्मा दिय म्मीमांसा न परैः कथमपि स्वायत्तीकर्तुं शक्येति सिद्धम् । एवञ्च, प्रमि ताऽधिकरणे परैः छिद्रान्तरालवृश्चिकविद्धतस्करन्याय श्शरणीकृतइति व्यक्तम् ॥

अथ। नन्वभिधानश्रुत्या ब्रह्मनिर्णायक मिद मधिकरणं व्यति रिच्यतां,लिङ्गेन ब्रह्मनिर्णायकाना मस्मदनुकूलत्वा दित्याशङ्का न्निराकरोति॥ यथा—

मू.॥ लिङ्गाना मिह यद्बहुत्व मुदित न्तत्ताऽन्तर श्चिन्तय
न्मर्यादा मजहा स्सुधीरपि महामीमांसकाना ङ्कथम्?
युक्त ङ्किन्तु भवेदिद ङ्कृतमते र्यद्वाऽपथ ङ्गच्छतो
गर्तान्त र्विनिपातनं नियतमित्याचक्षते लौकिकाः॥

लिङ्गानामिति॥ लिङ्गभूयस्त्वाधिकरणे परै र्मीमांसकमर्या
दत्तजलांजलीकृता। तथाहि, श्रीकण्ठभाष्ये, पूर्वं सर्वासु परवि
ब्रह्मोपास्य मिति स्थितम्। तस्योपास्यस्य ब्रह्मणो विशिष्य निर्धार
मिद मधिकरणम्। तैत्तिरीयोपनिषदि श्रूयते। सर्वोवै रुद्र स्तस्मै रुद्रायन
अस्तु। पुरुषोवै रुद्र स्सन्महो नमः। विश्वम्भूत म्भुवनञ्चित्र म्बहुधा
ज्जायमानञ्चयत्। सर्वोह्येपरुद्र स्तस्मैरुद्राय नमोअस्तु। कद्रुद्राय प्रचे
मीढुष्टमाय तव्यसे वोचेम शन्तमंहृदे। सर्वोह्येप रुद्रस्तस्मै रुद्रायनमो अ
नमो हिरण्यबाहवे हिरण्यवर्णाय हिरण्यरूपाय हिरण्यपतयेऽम्बिकाप
उमापतये पशुपतये नमोनमइत्यत्र सर्वात्मत्वादिभि रुमापतित्वेनच
माण म्परम्ब्रह्म प्रकृते सवितृमण्डलविद्यामात्रे उपास्य मुत सर्वासु परवि
द्यिति संशयः, कि न्तावत्प्राप्तम्। प्रकरणबाधाऽयोगात् प्रकृतविद्या
वोपास्यमिति प्राप्ते ब्रूमः। इद मुमासहित म्परम्ब्रह्म सर्वास्वपि परवि
सूपास्य न्तत्तलिङ्गसम्बन्धिवाक्यभूयस्त्वात्, तथाहि॥

सर्वोवैरुद्रइति वाक्ये, सर्वंख ल्विदम्ब्रह्म तज्जलानितिशान्त उ
सीतेति शाण्डिल्यविद्योपास्यत्वलिङ्गम्। पुरुषोवैरुद्रइति वाक्ये पु
सूक्तोपकोसलविद्याद्युपास्यत्वलिङ्गम्। महइत्यत्र महइति तद्ब्रह्म सआत्मा
अङ्गान्यन्या देवताइति व्याहृतिविद्योपास्यत्वलिङ्गम्। शन्तमम् हृदे

हृदयद्योतनात् दहरविद्योपास्यत्वलिङ्गम्, हिरण्यबाहवइति हिरण्य रूपत्वं सवितृमण्डलोपास्यत्वलिङ्गम् । उमापतयइति सर्वविद्योपास्यत्व लिङ्गम् । संसाररुद्रावकत्वा द्रुद्रइत्युच्यते परमात्मा शिवः एव मुमापतेः परब्रह्मण श्शिवस्य सर्वपरविद्योपास्यत्व म्परब्रह्मलिङ्गघटितै र्वाक्यै स्त्व सीयते वाक्यंहि प्रकरणा द्बलीयः तस्मा दुमासहितं संसाररुद्रावक म्परंवस्तु सकलपरविद्योपास्यमिति सिद्धमिति ॥

श्रीभाष्ये त्वस्मि न्नधिकरणे सर्वविद्योपास्यत्वलिङ्गानां स्वपक्ष प्रातिकूल्य मवगम्य अत्र लिङ्गशब्द श्चिह्नपर्यायइ त्युक्तम् । श्रुतप्रकाशिका याञ्च, चिह्नपर्यायइति प्रतीक मुपादाय नतु श्रुतिलिङ्गादिषु लिङ्गमित्यु क्तम् । तस्मा ल्लिङ्गशब्दस्य मीमांसकमर्यादा मपहाय चिह्नपरत्वाऽभ्युप गमेन ब्रह्मलिङ्गैरपि न मीमांसा विष्णुपरीकर्तु मशक्येति परैरेवाऽभ्युपगत त्वाऽवगमेन परै र्विफलकामैरेवाऽभावीति सुव्यक्तम् ॥

एवं स्थालीपुलाकन्यायेन लिंगभूयस्त्वाऽधिकरणमात्राऽवलोकेनेनापि श्रीकंठश्रीभाष्ययो स्तारतम्यं पर्वतपरमाणुतुल्यमितिविशदम् ॥

किञ्च, अन्तर्याम्यधिकरणे, श्रीभाष्ये, काण्वा माध्यन्दिना वाजस नेयिनश्च समामनन्ति । यः पृथिव्या न्तिष्ठ न्पृथिव्या अन्तरो यम्पृथिवी नवेद । यस्य पृथिवीशरीर मित्यारभ्य एवं सर्वेषु भूते ष्वात्मात्मीयेषुच तिष्ठन्त न्तत्तदन्तरभूत न्तत्तदवेद्यम्, तत्तच्छरीरक न्तत्तद्यमयन्त ञ्चनि र्निर्दिश्य, एषत आत्माऽन्तर्याम्यमृतइ त्युपदिश्यते । तत्र संश य्यते, किमय मन्तर्यामी प्रत्यगात्मा? उत परमात्मेति । किंयुक्तम्, प्रत्य गात्मेति पूर्वपक्ष मुपपाद्य, अन्तःप्रविष्टश्शास्ताजनानामित्यादी न्यौपनि

पदानि वाक्यानि परमात्मनएव प्रशासितृत्वं सर्वात्मत्व मित्यादीनि
वदन्ति तथा सुबालोपनिषदि, नैवेह किञ्चनाग्र आसी दमूल मनाधार
मिमाः प्रजाःप्रजायन्ते दिव्योदेवएकोनारायणइत्याद्युदाहृत्य, तस्मा त्परम
त्मैवाऽन्तर्यामी न प्रत्यगात्मा भवितु मर्हतीति सिद्धान्तितम्
तन्नसङ्गच्छते, यस्य पृथिवीशरीरमित्यादिनाम्नातस्याऽन्तर्यामित्वस्याऽ
मूर्त्यनन्यथासिद्धत्वेन तदन्यदेवताया मसामञ्जस्यात् । नच, वराहपु
णादिषु रुद्रस्याऽष्टमूर्तित्व न्नारायणवरप्रसादलब्धमिति निगदितमिति
शंक्यम् । तदुक्ते रवैदिकप्रक्षिप्तत्वेनाऽनुपादेयत्वात् । परब्रह्माऽसाधारण
सर्वान्तर्यामित्वस्य तदितरदेवतावरप्रसादलभ्यत्वाऽयोगात । अष्टमूर्त्यन
धारणधर्मतया सर्वलोकवेदप्रसिद्धस्य सर्वान्तर्यामित्वस्य दीपो ज्योति
परम्ब्रह्मेति वाक्यसदृशाऽर्थवादभूतनारायणपरम्ब्रह्मेतिवाक्येनवा पाञ्चरात्रा
नुजिघृक्षाप्रवृत्तसौबालोपनिषद्वाक्येनवा नारायणपरत्वनिर्णयाऽसम्भवात्
निषत्सु क्वचि न्नारायणनाम्नि श्रुतेपि कुत्रापि ,प्रसिद्धश्रुतौ तदीयरूपस्या
श्रवणात् श्रु ॥ उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठमिति
ऋतगूं सत्यं परंब्रह्म पुरुषं कृष्णपिंगळं, ऊर्ध्वरेतं विरूपाक्षमितिच प
मेश्वररूपस्याऽभ्यासेन श्रुतत्वाच्च औपनिषदस्य पुरुषस्योमासहायत्वादि
स्वरूपलक्षणलक्षितत्वाऽवगमेन नारायणपदस्य परमेश्वरपरत्वौचित्यात्
ईशकेनश्वेताश्वतरादिसर्वोपनिषदां परमेश्वरपरत्वस्य वेदपथे सुनिर्
तत्वेन तदनुरोधेन सुबालोपनिषद्गतनारायणपदस्यापि परमेश्वरप्रतिपा
कत्वौचित्याच्च । अन्यथा, सुबालोपनिषदः, विप्रतिषेधाऽधिकरणविष
त्वाऽवश्यम्भावात् । तस्मा दन्तर्याम्यधिकरणं न कथमपि नारायण

म्भवितु मर्हतीति युक्तम् । अपिच, जन्माद्यस्य यतइत्यधिकरणेन भव त्यस्माज्जगदिति जगत्कारणत्वप्रवृत्तिनिमित्तकभवपदाऽभिधानकमेव ब्रह्मे त्यवगम्यते । सैवहि सत्यादयइत्यधिकरणेनापि भूसत्तायामिति धातो र्भवतीति महासत्ताधिकरणत्वप्रवृत्तिनिमित्तकभवपदाऽभिधेयमेव ब्रह्मेति सिध्यति । आनन्दादयः प्रधानस्ये त्यधिकरणेन मृडसुखनइतिधातुनिष्पन्न परानन्दगुणकत्वप्रवृत्तिनिमित्तकमृडाऽभिधानमेव परम्ब्रह्मेति विज्ञायते । अत्ता चराचरग्रहणा दित्यधिकरणेन शृणाति, हिनस्ति सर्वज्जगदित्यर्थक शर्वपदाभिधेयमेव ब्रह्मे त्यनुगच्छति । प्रशासनादित्यधिकरणेन प्रशासन स्येशनसमानाऽधिकरणत्वाऽवश्यम्भावेन ईशेशानेश्वरमहेश्वराद्यभिधानमेव ब्रह्मेति निश्चीयते ॥

इदञ्च, जिज्ञास्यपरमात्माऽसाधारणाऽभिधानतया मीमांसानिर्दिष्ट म्ब्रह्मपदमपि न परै स्स्वायत्तीकर्तुं शक्यते ॥

तथाच–महाभारते, युधिष्ठिरो धर्ममयो महाद्रुम स्स्कन्धोऽर्जुनो भीमसेनोऽस्य शाखाः, माद्रीसुतौ पुष्पफले समृद्धे मूलङ्कृष्णो ब्रह्मच ब्राह्मणाश्च । नृपाणां दैवतं विष्णु र्विप्राणा मग्निर्ब्रह्मच । नारीणां दैवतं भर्ता लोकानां ब्राह्मणं विदुरित्यादिप्रदेशेषु शिवे निरुपपदब्रह्मपदप्रयो गेण भगवा न्सात्यवतेय स्स्वाभिमतं स्पष्टीचकार युधिष्ठिरो धर्ममयइति श्लोके, श्रीकृष्णस्य साहचर्यात्, ब्राह्मणाना मनुग्रहाच्च, जय आसीदिति प्रसिद्धेः । तज्जयोपायभूतस्य श्रीकृष्णस्य, तथाभूताना म्ब्राह्मणानाञ्च मध्ये तद्वदेव मूलत्वेन निरूप्यमाणो ब्रह्मशब्दार्थः तथाभूतएव ग्रहीतुं युक्तः । सच पारिशेष्या दौचित्याच्च शिवएवेत्यवगम्यते । मोक्षधर्मे,

निहतांस्तेन पूर्वन्त्वं हतवानसि वै रिपून् । अप्रमेयप्रभाव न्त न्देवदे मुमापतिं, भजस्व प्रयतो नित्यं शरण्यं हरमव्ययमिति पार्थ म्प्रति श्रीकृष्णवचनेन, आश्वमेधिकेच वयं सर्वेच तद्भक्ता स्सचाऽस्माक म्प्रस दति । तत्प्रसादा द्वयं राज्य म्प्राप्ताः कौरवनन्दनइति, कस्तां सेना म्मह भाग मनसापि प्रधर्षयेत् , द्रोणकर्णनुत्वै गुंप्ता म्महेष्वासैः प्रहारिभि ऋते देवा न्महेष्वासा द्वहुरूपा न्महेश्वरात् । तस्यैवच प्रसादेन निहत श्शत्रव स्तवेति युधिष्ठिरम्प्रति भीमसेनवचनेन पाद्मपुराणे, तत्राऽ मायिनो विष्णो रंशः कृष्णोहि तिष्ठति, दर्शयिष्य स्युपायांस्ते स वः ममाज्ञया, इतिपरित्यक्तकिरातवपुष श्शिवस्य वचनेन शिवप्रसादादे पाण्डवानाञ्जयो वृत्तइत्यस्याऽर्थस्य स्पष्टत्वात् । यतो धर्म स्ततो जयइ धर्मस्य जयमूलत्वप्रसिद्धे स्तत्प्रमितिद्वारा जयोपायभूतस्य ब्रह्मशब्दार्थस्य वेदस्य सद्भावेपि चेतनैरेवाऽवयवै रिह सावयवरूपकसम्पादना दब ब्रह्मशब्दस्य चेतनपरत्वाऽवश्यम्भावेन शब्दपरत्वाऽयोगात् । तथा, नृपा न्दैवतंविष्णुरित्यादिश्लोके ब्रह्मशब्दार्थोपि शिवइत्यवसीयते । त्वन्देवं ब्राह्मणोस्यह म्मनुष्येषु ब्राह्मणोवै ब्राह्मण मुपधाव त्युपत्वा धावामीति छान्दोग्योपनिषदि । नृपाणा न्दैवतंविष्णुस्तथैवच पुरन्दरः, विप्रा मग्नि रादित्यः ब्रह्माचैव पिनाकधृत् । इत्यादिकौर्मादिवचनेषु शिव ब्राह्मणदेवतात्वप्रतिपादनात् ॥

एवम्भारते प्रयुक्तस्य ब्रह्मपदस्य शिवपरत्वाऽवश्यम्भावेन तत्सम कर्तृकाया म्मीमांसायामपि प्रयुक्तस्य ब्रह्मपदार्थस्य शिवस्यैव व्यासतात्प विषयत्वौचित्यात् ॥

अन्यच्च, उभयलिङ्गाऽधिकरणेन निरस्तसमस्तदोषं निखिल माङ्गल्यगुणाऽधिकरणञ्च ब्रह्मे त्यभ्युपगतत्वेन तदुभयलिङ्गप्रवृत्तिनिमित्तक शिवपदाऽभिधेयमेव ब्रह्मे त्यवगम्यते ॥

तथाहि, शाम्य न्त्यस्मि न्दोषाइत्यर्थे, सू ॥ सर्वनीघृष्वरिष्व लष्वशिवपट्वप्रह्वाइत्यौणादिकसूत्रेण शमिधातो र्वन्प्रत्ययेन इत्वमलोपा भ्याञ्च शिवशब्दो निपातितः, निरस्तसमस्तदोषत्व माचष्टे । अपिच, शिवानि=निखिलमाङ्गल्या न्यस्य सन्तीति मत्वर्थीयाऽच्प्रत्ययान्तो पि सन्नयं शिवशब्द स्सकलमाङ्गल्यगुणनिधित्व मावेदयति । तदुक्तम् ॥ अनादिमलसंश्लेषप्रागभावा त्स्वभावतः, अत्यन्तपरिशुद्धात्मा शिवइत्यभि धीयते । अथवाऽनन्तकल्याणगुणैकनिधि रीश्वरः । शिवइत्युच्यते सद्भि रिशवतत्वाऽर्थवेदिभिरिति । तस्मा न्नित्यनिर्धूतनिखिलदोषत्वं निखिल मांगल्यगुणरत्नाकरत्वञ्च शिवत्वमिति सिद्धम् ॥

एवञ्च, परैः निर्विशेषवादखण्डनावसरे नैर्गुण्यबोधिनीनां श्रुति सूक्तीनां हेयगुणराहित्यपरता मभ्युपगम्य निरस्तहेयगुणं निरवधिककल्या णगुण म्ब्रह्मेति राद्धान्त मभ्युपगच्छद्भिरपि स्वाऽभ्युपगतदेवताया मुभय लिंगत्वरूपब्रह्मलक्षणवैधुर्येण विफलकामैरेवाऽभावीति व्यक्तम् ॥

एतेन, शिवतत्परसूत्रभाष्यकर्तृश्रीकण्ठयोगिना म्प्रतिभटतया प्रवृत्तस्य श्रीभाष्यकर्तुः मीमांसानिर्धारितब्रह्मलक्षणाऽभिधायिनिजाभिधान रहितदेवतान्तरपरिग्रहेण शार्दूलाऽनुकरणार्थतप्तमुद्रामुद्रितजम्बुकन्यायोऽनु सृतइति विदितम् ॥

विस्तरस्तु वैष्णवपथप्रतिषेधे ब्रह्मपरिष्कारेच द्रष्टव्यइति दिक् ॥

अव॥ अथ परेषां विफलकामत्वेपि सदुद्यमत्व माह ॥

मू॥ श्रीकण्ठैकसुलभभावविभवा वैयासिकीय कृतिः
चौर्येणाऽपहृता त्वया वशयितुं संक्लेशिता सर्वशः ।
पौलस्त्येन महीसुतेव तदपि श्रीनाथभक्ति क्षितौ
सुस्थीकर्तु मभीच्छता सुचरितं मन्यामहेऽनुष्ठितम् ॥

श्लो॥ नागलिङ्गकृतौ ब्रह्मपथे व्यासपथाकृतौ ।
रामानुजीयस्य पथः प्रतिषेध इतीरितः ॥

शिवम् ।

—

## माध्वाध्वविध्वंसनम्

अव ॥ अथ माध्व मध्वानं विध्वंसते। यथा—

मू ॥ अत्यन्ताऽप्रथिता श्श्रुतीः प्रवदसि प्रामाण्यदुर्भिक्षतः
सिद्धान्तस्थितयेऽवतारयसिवा यद्ब्रह्मतर्कं म्पुनः ।
वातांशं स्व मथाऽब्रवीः स्वयमहो स्वस्याप्ततासिद्धये
भिन्नोऽध्वा विदित स्तव श्रुतिमता द्वैयासिका दध्वनः ॥ १

अत्यन्तेति ॥ ननु, युक्तियुक्तं वचोग्राह्यं नतु पौरुषगौरवमिति न्यायेन परकीयोपि पन्था श्श्रद्धातव्यइतिचे न्न । प्रामाणिकमर्यादासमुल्लङ्घनेन तदवलम्बितस्य मार्गस्य दुरुपपदत्वा त्तथाहि, तत्र, कमठ माठर कौण्डरव्य कौण्डिन्य माण्डव्य पौष्यायण पौलायण सौकरायण कौपायण बृहदुद्दाल कौद्दालकायन गौपवन भाल्लवेय चतुर्वेदसंहिता महासंहिता नारायणतन्त्र बृहत्तन्त्र पुरुषोत्तमतन्त्र मायावैभववचनानी त्यत्यन्ताऽप्रसिद्धानामेव वचनानां साक्षित योपन्यासः, तदुपन्यासप्रयुक्त स्याऽनाप्तत्वशङ्कापरिहाराय हनुमद्भीमसेनक्रमेण वायो स्स्वय न्तृतीयाऽवतार इ त्युद्घोषः । तत्रच साक्षितया, प्रथमो हनुमान्नाम द्वितीयो भीमसेनकः । पूर्णप्रज्ञ स्तृतीयस्तु भगवत्कार्यसाधकइति स्मृतिवचन मस्तीति स्वयमेव तदुदाहरणम् । बडित्था तद्वपुषे धायि दर्शन मित्यादिऋग्वेद मन्त्रस्य स्वकल्पितमाध्ववतारपरतया प्रदर्शन मित्यादिना प्रामाणिकमर्यादा समुल्लङ्घन मनन्त न्दृश्यते, तस्मा त्परकीयोऽध्वाऽनुपादेय स्सुधियामित्यलम् ॥

अव॥ अथ परमते श्रुतिसूत्रविरोधं निरूपयति॥ यथा—

मू॥ विष्णौ शास्त्रसमन्वयं प्रकुरुषे न्यायै रपूर्वै र्यत
स्सूत्रै र्दूषित मात्मसा यदकरो र्वाद न्निमित्तैकक्रम्।
यस्मा द्वक्षिच मुक्तिहेतु मपरं वायोःप्रसाद म्पर
न्तस्मा द्व्यासमतो न ते कुसृतितो योय ञ्छ्द्ध्वा वृतः॥

विष्णाविति॥ अत्राऽय माशयः। यद्यपि, नारायणपारम्यतत्समुद्रा
परिग्रहेण मध्वरामानुजयो रुभयोरपि पाञ्चरात्रमात्रप्रमाणकतया वैष्णव
प्रतिषेधेन रामानुजीयपथप्रतिषेधेनच माध्वोऽप्यध्वा विध्वस्तप्रायएव
तथापि पूर्णप्रज्ञेन पृथ गाचार्यपीठ मलञ्चिकीर्षुणा रामानुजीया त्पथो वैलक्ष
प्रसाधनाय योयं गौतमादिमुनिसम्मतः केवलनिमित्तकारणवाद स्शरणीकृ
निराकार्योऽवशिष्यते। सोऽपि श्रुतिसूत्रविरुद्धएव॥ तथाहि—

सू॥ प्रकृतिश्च प्रतिज्ञादृष्टान्ताऽनुपरोधा दित्यधिकरणे किमात्मक ब्र
णः कारणत्वमि त्याशंक्य स ईक्षा ञ्चक्रइत्यादिश्रुतिभ्यो ब्रह्मकारणत्व स्येक्ष
पूर्वकत्वाज्ञानेन ईक्षणपूर्वकस्य कर्तृत्वस्य निमित्तकारणेष्वेव कुलालादि
दृष्टतया परमेश्वरस्यापि निमित्तकारणत्वमेव युक्त म्प्रतिपत्तुमिति पूर्वप
प्राप्ते प्रकृतिश्च उपादानकारणञ्च ब्रह्माऽभ्युपगन्तव्यं निमित्तकारणञ्च
न केवल न्निमित्तकारणमेव। कस्मा त्प्रतिज्ञादृष्टान्ताऽनुपरोधात्। ए
म्प्रतिज्ञादृष्टान्तौ श्रौतौ नोपरुध्येते। प्रतिज्ञा तावत्। छान्दोग्ये, उत
मादेश मप्राक्ष्यो येनाऽश्रुतं श्रुत म्भव त्यमत म्मत म्भव त्यविज्ञातंविज्ञा
मिति। तत्र चैकेन विज्ञातेन सर्व मन्य दविज्ञातमपि विज्ञात मि
प्रतीयते। तच्चोपादानकारणविज्ञाने सर्वविज्ञानं सम्भव त्युपादानकार

व्यतिरेका त्कार्यस्य । निमित्तकारणाऽव्यतिरेकस्तु कार्यस्य नास्ति । लोके तक्ष्णः प्रासादव्यतिरेकदर्शनात् । दृष्टान्तोपि यथा सोम्यैकेन मृत्पिण्डेन सर्वं म्मृण्मयं विज्ञातं स्या द्वाचारम्भणं विकारो नामधेय म्मृत्तिकेत्येव सत्य मित्युपादानगोचरएवाम्नायते । तथा मुण्डकेपि, कस्मि न्नु भगवो विज्ञाते सर्वमिदं विज्ञात म्भवतीति प्रतिज्ञा । यथा पृथिव्या मोषधय स्सम्भवन्तीति दृष्टान्तः । एवं बृहदारण्यकेपि, आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञातइदं सर्वं विज्ञातमिति प्रतिज्ञा । स यथा दुन्दुभे र्हन्यमानस्य न बाह्यांच्छब्दा न्शक्नुया द्ग्रहणाय दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीतइति दृष्टान्तः । एवं यथासम्भव म्प्रतिवेदान्त म्प्रतिज्ञा दृष्टान्तौ प्रतीयमानौ केवलनिमित्तकारणवादे उपरुध्यमानतया तदनुप रोधाय भगवता सूत्रकृता श्रुतिप्रामाण्यशरण्येन केवलनिमित्तकारणवादो दूरीकृतः । तथापि, सएव परै स्तर्कपाञ्चरात्रमात्रप्रमाणकत्वेनवा अवै दिकमूर्धन्यत्वेनवा बहूकृतइति तदीयस्य पथ श्श्रुतिसूत्रविरुद्धतया ब्रह्म पथबहिर्भूतत्वं व्यक्तमिति ॥

अव ॥ एवं श्रुतिविरुद्धसमयपरिग्रहस्य प्रयोजन माह ॥ यथा—

मातरि श्वाकृतिं गृहता हि त्वया<br>
मातृभूता श्रुति र्दूषिता यद्यपि ।<br>
एवम प्यच्युते भक्तियुक्तैः कलौ<br>
स्थापक म्मन्महे केवलद्वापरम् ॥　　३

मातरिश्वेति ॥ श्रुतिदूषणभूतां पूर्णप्रज्ञकृतां वेदाऽर्थविवरण रीतिं स्थालीपुलाकन्यायेन विशदयितुं किञ्चि दुदाह्रियते । यथा,

श्रु॥ वसन्ते वसन्ते इतिवाक्ये, वसतीति वसः, पचाद्यच्। तनोतेः तिः, औणादिको डिप्रत्ययः। पूर्वपदस्य नकारागमः । वसश्चाऽ तिश्चेति वसन्तिः। सर्वत्र व्यासो वर्तमानः जगत्कर्ता चेत्यर्थः। त सम्बुद्धिः वसन्तइति, द्विरुक्ति रादरार्था। इत्यादिकं विवरण माल स्सम्पूर्णप्रज्ञतामेव व्यनक्ति । अहो! बिभे त्यल्पश्रुता द्वेदो मा म प्रतरिष्यतीति पुरस्तादेव भगवा न्पाराशर्यो भविष्यत श्श्रुतिप्रतार न्समस्मार्षीत्। विस्तरस्तु मध्वतन्त्रमुखमर्दने श्रीमदप्पयदीक्षितसार्वभौ निरूपितइति नेह पुनः॥

केवलद्वापरं—केवलभेदवादिनम्, मुख्यं कलिसखंचे त्यर्थः द्वापरस्य कलिसखत्वं विदितम्। कलिसखस्य कलिमलाऽपनोदककमल भक्तियोगप्रतिष्ठापनपरत्वं युज्यतइति, मातृभूतां श्रुतिं दूषयतापि पु पोत्तमभक्तियोगप्रतिष्ठापनेन युक्तमेवाऽऽचरितमितिच व्यज्यते॥

नागलिङ्गकृतौ ब्रह्मपथे व्यासपथाकृता ।
वध्वनो मध्वनीतस्य विध्वंस इति कीर्तितः॥

इह यद्यपि श्रीकरभास्करवल्लभनिंबार्कादिप्रणीतानि ब्रह्मसू भाष्याणि विद्यन्तेऽन्यानि बहूनि। तथापि, महागजाः पलायन्ते मश कानान्तु कागतिरिति लोकोक्त्या प्रधानमल्लनिबर्हणन्यायेनच प्रसिद्ध भाष्याणां निरस्तत्वेन तदन्येषां निरासोऽर्थसिद्ध इति ज्ञेयम्॥

अव॥ एवं विमतनिराकरणेन सिद्ध मर्थं विशदयति॥

मू॥ स्फूर्जत्तर्कोक्तिगर्जाप्रचलितभुवने क्षुद्रदेवक्षणाभे
दुर्वादाऽसारसारे विविधकुपथदंभोन्नतांऽभोदजाते ।

निर्धूतेऽशेप मित्थं स्फुटतर मनघै र्न्यायजंइग्निलौघै
श्श्रीकण्ठाऽध्वा समिन्धे रविरिव शुक्ता तेप्सितः पारिशेष्यात् ॥

स्फूर्जदिति ॥ क्षणाभे—क्षणप्रभायुते ॥ कुपथदम्भोन्नतेति विशेप णोत्तरपदसमासः ॥

अव ॥ उपसंहरति ॥

मू ॥ आद्यत्वा न्मुक्तिदत्वा दृजुगतिविवृताम्नायसम्बोधितत्वा
च्छास्त्रामूलाऽग्रजाग्रत्सहजविवरणावेदितस्वोन्नतित्वात् ।
सर्वाचार्याऽनुमोदप्रकटितमहिमाऽलङ्कृतत्वा दशङ्क
मेक श्श्रीकण्ठसूक्तः किल कृतमतिभि र्निश्चितो ब्रह्ममार्गः ॥ २

आद्यत्वादिति ॥ आद्यत्वात्, शांकरादिभ्यः पथिभ्यइत्यर्थः । मुक्तिदत्वादिति । शिवसायुज्यमेव परममुक्तिरिति मुक्तिनिष्कर्षे निर्धारि तत्वेन तस्य श्रीकंठपथैकलभ्यत्वा दित्याशयः । ऋजुगतीति । श्रीक ण्ठाध्वन आर्जवस्य वेदपथे सुनिरूपितत्वा दनुसन्धेयम् । सर्वाचार्येति । सू ॥ शब्दादेव प्रमितइत्यधिकरणादिपु शब्दादेव—ईशानशब्दादेवेत्या दिना श्रीकण्ठभाष्योक्तस्यैवाऽर्थस्य तदितरभाष्येष्वपि परिग्रहेण सर्वाचार्यानु मोदोविदितः ॥ अत्र यद्यप्याद्यत्वं न साधक न्तथापि त दभ्यर्हितत्व मूलतयाऽवश्यपरिग्राह्यत्वसाधकत्वा दार्जवादिहेतूपोद्बलकत्वेन गृहीत मितिज्ञेयम्, एवमुक्तै र्हेतुभि श्श्रीकण्ठीयएव ब्रह्मपथइति निश्चित इत्यन्वयः ॥

वेदव्यासपथरूढसत्यब्रह्मपथाह्वयम् ।
योगिश्रीकण्ठकथितं शिवाऽद्वैतपथं परम् ॥ १

मताऽभिमाना न्मोहाद्वा भ्रमाद्वा नाऽनुयान्ति ये ।
तेऽन्धगोलांगूलसंज्ञन्यायोदाहरणं ध्रुवम् ॥

श्रुतिशतं दिशतः परमेशितु
स्तदनु सूत्रयतश्च महामुनेः ।
मत मिहा ऽऽकुलितंकिल यै रलम्
स्वमतसृष्टिपरै रिह तैं रलम् ॥

मा मा मागृह्णीध्वं
प्रतिव क्त्याचार्यनिचयवचन मिति ।
न्याय्याऽर्थाप्त्यै पार्थः
युध्य न्गुरुभिः प्रमाणं नः ॥

लिंगाम्बाहृदयेशेन नागलिंगेन निर्मिता ।
श्रुतिसूत्राब्धिकुव्याख्याविमर्शादर्शभासुरा ॥
वृत्तिर्ब्रह्मपथी शिवाऽद्वैतपर्यंङ्किकाह्वया ।
भक्तिमतां मुक्तिपदप्राप्त्यै भूया सुखावहा ॥
अन्यै स्स्वप्रतिभावला द्य दपथं सम्बाध मुत्प्रेक्षितम्
प्राग्भि र्य त्समुपेक्षितं बुधवरै स्तत्खण्डनेऽनादरात् ।
सत्यब्रह्मपथप्रबोधनविधौ य च्चोदितं शम्भुना
त त्सर्वं गिरिशप्रसादमधुरं भाग्य म्मदीय म्परम् ॥
भावाख्यवत्सरेऽस्मि न्भारद्वाजेन नागलिंगेन ।
भावे पदाम्बुजयुगे समर्पितो ब्रह्मपथ एषः ॥

पञ्चत्रिंशदुपस्कृतपञ्चसहस्रीमितेषु वृत्तेषु ।
कल्यब्देषु ग्रथितो ब्रह्मपथो नागलिंगेन ॥ ९

वरंगल् रामलिंगेशभक्तसंघप्रचोदनात् ।
कृतो ब्रह्मपथः कृत्स्नकापथोन्मथनप्रथः ॥ १०

समन्ता द्दुर्दन्ता मतिविपुलविद्यावल्युजो
विपर्यासेऽर्थानां पटव इह मत्ताइव गजाः ।
न लक्ष्यीकुर्मे स्तान् स्वबलदृढविश्वासविवशान्
बलं याथार्थ्यं नोऽप्रतिहत मुदिन्धेऽक्षयतमम् ॥ ११

कुमार्गात्तो नाको नरकइव नेष्टः कथमपि
सुमार्गे य ल्लब्धं निधनमपि न श्शाश्वतधनम् ।
यशोवा मृत्युर्वा जयति पथि सत्ये प्रचरतां
विधेयोऽस्माकं त न्निगमपथनिर्धारणविधिः ॥ १२

तत्तन्मतप्रत्ययशालिचेतसा
म्महाजनाना म्मतिभेदसाहसात् ।
वेदान्तयाथार्थ्यपरीक्षणोत्सुक
मुधीसमाराधनलाभलोभतः ॥ १३

रज्ज्वा वलि न्योभयदेशपाशया
ह्याकृष्यमाणस्तु बला दित स्ततः ।
कर्तव्यमूढोपि परात्मयन्त्रितः
प्रावर्तिषि ब्रह्मपथाऽवधारणे ॥ १४

दग्धु न्तृणं चालयितुंच नाऽलं
विनाऽग्निवायू यदनुग्रहेण ।
कर्तार मीशं शरणं गताऽस्मः
प्रयोजकं सर्वकृतिव्रजस्य ॥
सम्भाव्य मत्ताऽवगुण म्मदीयं
सन्तं गुणंचैव मदन्तरात्मनः ।
सम्भावयन्त स्सुजनाऽनुजीविनो
ममाऽनुगृह्णन्तु कृति म्महान्तः ॥

हरः ओम् । तत्सत् ।
शिव म्भूयात् ।

---

तेनालि भारती मुद्राक्षरशालायां मुद्रितः १९३७

वेदपथे - शिवाद्वैतपथविधौ।

## साध्वसाधु पत्रिका।

| पृष्ठ | पंक्ति | असाधु | साधु |
|---|---|---|---|
| ६ | २ | भिश्श्चि | भिश्चि |
| ९ | १६ | मप्य | मेवा |
| १० | १८ | गौरव | गौरवग्रस्त |
| १३ | ३ | सम्वन्थो | सम्वन्धो |
| ,, | १६ | क्रया | क्रिया |
| १४ | १ | मिघ्या | मिथ्या |
| ,, | २ | वत्यु | वप्यु |
| ,, | १३ | रोथा | रोधा |
| १५ | ९ | तच्त्रव | तच्छ्रव |
| १६ | ५ | वहुघा | वहुधा |
| १८ | ४ | सामर्घ्ये | सामर्थ्यें |
| ,, | १३ | दनघा | दनधा |
| १९ | १५ | भिभ | भिम |
| २० | ३ | ग्रंथेन | ग्रन्थेन |
| ,, | ४ | समर्घ | समर्थ |
| ,, | १३ | तार्घ | तार्थ |
| ,, | १५ | विरोथात | विरोधात |
| ,, | १७ | विरोथात् | विरोधात् |
| २१ | ८ | ग्रन्घः | ग्रन्थः |

| पृष्ठ | पंक्ति | असाधु | साधु |
|---|---|---|---|
| ३१ | १३ | पृधिवी | पृथिवी |
| ३२ | १७ | त्यर्धः | त्यर्थः |
| ३३ | ५ | थस्ता | घस्ता |
| ,, | १० | पूर्वार्ध | पूर्वार्थ |
| ,, | १७ | ध्येयः | घ्येयः |
| ३५ | १० | सिध्यतो | सिध्यती |
| ,, | १८ | नार्धकम् | नार्थकम् |
| ३८ | ३ | मध्यमं | मध्यमम् |
| ,, | ७ | अन्यधा | अन्यथा |
| ३९ | ३ | न्दाप | न्द्रोप |
| ४० | ७ | शब्दार्ध | शब्दार्थ |
| ,, | २० | सार्धक्य | सार्थक्य |
| ४३ | १४ | चतुथ | चतुर्थ |
| ४४ | ७ | स्फोरणार्घ | स्फोरणार्थ |
| ,, | ,, | करणार्ध | करणार्थ |
| ४५ | २ | प्राधान्वे | प्राधान्ये |
| ४६ | ७ | मनिर्यम् | मनिवार्यम् |
| ४७ | ८ | मूर्थ | मूर्ध |
| ४८ | ६ | कधिताः | कथिताः |

वेदपथे - केवलाद्वैतप्रतिषेधे।

## साध्वसाधुं पत्रिका।

| पृष्ठ | पंक्ति | असाधु | साधु |
|---|---|---|---|
| १ | ८ | किंच | किञ्चि |
| ३ | १६ | दृश | दृश्य |
| ४ | ५ | ममेय | मदुष्ट |
| १२ | ५ | दर्शनार्धम्वा | दर्शनार्थंवा |
| १४ | ७ | लक्षयन्तो | कक्षयन्ती |
| १९ | ८ | तद्थ | तदर्थं |
| २८ | ६ | श्रत्य | श्रुत्य |
| २९ | ७ | प्रकुता | प्रकृता |
| ३१ | १७ | श्रय | श्रूय |
| ३३ | ४ | निर्मघना | निर्मथना |
| ३५ | २० | निष्कर्पार्थम् | निष्कर्पार्थम् |
| ३९ | ११ | न्मिध्यात्व | न्मिथ्यात्व |
| ४० | १९ | पारश्येन | पारवश्येन |
| ४६ | ९ | महति | महंति |
| ,, | १६ | सोस्य | सोम्य |
| ४७ | २ | प्रदर्शता | प्रदर्शिता |
| ,, | १० | न्निर्धार | निर्धार |
| ४८ | १२ | र्थयति | र्थयते |
| ५७ | १९ | लिङ्गचत | लिङ्गवत |

| पृष्ठ | पंक्ति | असाधु | साधु |
|---|---|---|---|
| ६० | २ | त्य | इत्य |
| ,, | ६ | कथञ्च | कथञ्चि |
| ,, | १५ | दन्वेष्ठव्य | दन्वेष्टव्य |
| ६२ | ६ | जिघित्सो | जिघत्सो |
| ६४ | ४ | निच्शीयते | निश्चीयते |
| ६७ | १६ | इद | इदं |
| ७१ | १२ | भवेन | भावेन |
| ७५ | १ | प्रवन्था | प्रवन्धा |
| ८२ | १ | विद्यते | नहिविद्यते |

वेदपथे - वैष्णवपथप्रतिषेधे ।

## साध्वसाधु पत्रिका ।

| पृष्ठ | पंक्ति | असाधु | साधु |
|---|---|---|---|
| ८ | २ | मिमाय | रिमाय |
| १० | १७ | निर्थारितम् | निर्धारितम् |
| १४ | २ | निवर्तिकत्वं | निवर्तकत्वं |
| ,, | १८ | नु | ननु |
| १६ | ४ | लोकसिद्धि | लोकसिद्ध |
| २७ | ३ | दृष्ठत्वा | दृष्टत्वा |
| ,, | ६ | व्वव | व्यव |
| २९ | ७ | सम्वन्ध | सम्बन्धं |
| ,, | १२ | किञ्चि | किञ्चि |
| ,, | १३ | लभम | लभत |
| ३० | ९ | दहं | दहं |
| ३२ | १९ | नारायणस्ये | नारायणस्यो |
| ,, | २१ | णस्ये | णस्यो |
| ३३ | ४ | स्स्त्व | स्स्व |
| ,, | ८ | यतात्मनो | यतात्मानो |
| ३८ | ५ | निर्थारितः | निर्धारितः |
| ४२ | ६ | शब्दित्वम् | शब्दितत्वम् |
| ,, | १० | प्रतद्योचे | प्रतद्वोचे |
| ४३ | ११ | प्राथान्य | प्राधान्य |

| पृष्ठ | पंक्ति | असाधु | साधु |
|---|---|---|---|
| ४५ | २ | अतश्र | अतश्च |
| ५१ | १३ | मूर्धन्य | मूर्धन्य |
| ६२ | १५ | त्यादिन | त्यादिना |
| ,, | १६ | नान | नाना |
| ६५ | १७ | पथ | पथा |
| ,, | २ | गताः | गतः |

व्यासपथे।

## साध्वसाधु पत्रिका।

| पृष्ठ | पंक्ति | असाधु | साधु |
|---|---|---|---|
| १ | १६ | विन्नृष्टा | विमृष्टा |
| ५ | १ | निपद | निपदा |
| ,, | ८ | म्मूलं | मूलं |
| ६ | २ | वहुश्रा | वहुधा |
| ,, | ४ | भिदा | भिधा |
| २ | ७ | मीमापा | मीमांसा |
| ,, | १० | निर्धि | निर्दि |
| ,, | १६ | प्रथान | प्रधान |
| ३ | १९ | कल्वो | कल्पो |
| ५ | १३ | भूत्रे | सूत्रे |
| ८ | ६ | पूर्णे | पूर्णे |
| ,, | १३ | रूयं | रूपं |
| ११ | १९ | प्रामाण | प्रमाण |
| १२ | १४ | सिथ्यतो | सिध्यती |
| १५ | ११ | तर्म | तद्धर्म |
| ,, | १३ | दृश्व | दृश्य |
| १६ | १५ | मुञ्चतेति | मुञ्चथेति |
| १७ | १४ | नैव | नैन |
| २१ | ९ | सगणो | सगुणो |

| पृष्ठ | पंक्ति | असाधु | साधु |
|---|---|---|---|
| ,, | १७ | सगुणविपश्चिणी | क्लिसगुणपरा |
| २४ | १८ | च्चाऽन्यै | क्चिाऽन्यै |
| २५ | १२ | त्काण | त्कारण |
| २८ | २० | णाम्बुद्धि | णांनबुद्धि |
| ३९ | ८ | प्रवर | प्रवरै |
| ४० | ५ | दर्वारंति | दुर्वारैवेति |
| ४२ | ६ | काब्वे | काव्ये |
| ४५ | १९ | कर्णमुप्फ | जान्विन्द्रलुप्त |
| ४७ | १ | वैसि | वैथासि |
| ४८ | १ | प्रधिता | प्रथिता |
| ,, | ७ | काम् | कां |
| ५४ | २० | गम | गमा |
| ५६ | १५ | निर्धि | निर्दि |
| ५८ | ४ | प्राति | प्रीति |
| ६० | १५ | सन्थेयम् | सन्धेयम् |
| ६१ | ६ | सम्बोध्य | सम्बोध्य |
| ,, | ११ | सज्ञित | संज्ञित |
| ६५ | १६ | रितीमम | रित्येता द्दशान |
| ६६ | ४ | सिद्धान्त | सिद्धान्त |
| ,, | १७ | यन्त्र | यन्त्रु |
| ७० | १ | यद्न्र | यद्रू |

## साध्वसाधु पत्रिका।

| पृष्ठ | पंक्ति | असाधु | साधु |
|---|---|---|---|
| २ | २२ | संश्लिस्य | संश्लिष्य |
| ४ | १६ | निवद्ध्य | निवध्यते |
| ५ | १५ | द्विक्षिप्तनैजान्तरा | त्सन्दिग्धचित्ताभृशं |
| ७ | १९ | मायात्र | मायात्रा |
| ९ | १२ | रादरणतु | रादरेणतु |
| २६ | २० | यदप्युक्तम् | यदप्युक्तम् |
| २८ | १९ | नच, | नहि |
| ६५ | ५ | पीड्येरन् | पीड्येरन् |
| ७१ | ६ | सिद्धत्वाम् | सिद्धत्वात् |
| ७९ | १७ | सृतः | स्मृतः |
| ९० | २० | स्स्य | स्स्या |
| ९३ | १ | चा | नचा |
| ११८ | १६ | स्पर्शास्य | स्पर्शस्य |
| १२२ | ११ | विभापत्त्या | विभागापत्त्या |
| १२४ | १७ | रूर्ध्वे | रूर्ध्वे |
| १२८ | १२ | तदतिक्रये | तदतिक्रमे |
| १३४ | ६ | कार्ध्याय | कार्य्याय |
| " | १७ | वैयर्ध्यात् | वैयर्थ्यात् |
| १४३ | ८ | शरर | शरीर |
| १५८ | ३ | अपम | अनुपम |
| १५९ | ३ | सूयोमय | सूर्यामय |

| पृष्ठ | पंक्ति | असाधु | साधु |
|---|---|---|---|
| १५० | ८ | तदनु | किञ्च, तमात्मस्थं पश्यन्तिधीरास्तेषां शाश्वतीनेतरेषा मित तस्य स्वनिष्ठपरमे सन्धानस्य आत्म ग्रहणैकसाध्यतया स्वरूपग्राहक मात्मैक पत्तिपरं शास्त्रं रून्धतीन्यायेन प साक्षात्कारसाधक मा तम् ॥ तदनु । |

वेदपथे - केवलाद्वैतप्रतिपेवे ।

| पृष्ठ | पंक्ति | | |
|---|---|---|---|
| २३ | ९ | हृदयम् | अत्रानुबन्धः ॥ यद्वा,एवं श्रु॥ ब्रह्मविदाप्नोति प |

त्यादिश्रुत्यन्तसिद्धपरमेश्वरप्राप्तिरूपाया मुक्ते स्तत्प्रसादैकसाध्यत्व मव मुमुक्षुविषये सुप्रसन्नस्य परमेश्वरस्य पाशमोचनप्रकार माह । त आत्मेति ॥ एष आत्मा=परमेश्वरः । तस्य=उपासकस्य । तम्प्रति स्वाम्-निजम् । तनूम्—रूपम् । विवृणुते=प्रकाशयतीत्यर्थः । श्रु संदृशेतिष्ठतिरूपमस्य । सू ॥ तदव्यक्तमाहहि ॥ इत्यादि श्रुतिसूत्रै रहस्य विदितं निजरूप मुपासकस्य दर्शयति । ततश्च ॥ श्रु॥ क्षीयन्तेचाऽस्यकर्मा तस्मिन्दृष्टे परावर इत्युक्तरीत्या परमेश्वरसाक्षात्कारविध्वस्तकर्मपा श्रु ॥ निरंजनः परमं साम्य मुपैतीत्युक्त परमेश्वरसारूप्यरूपा मु समधिगच्छतीति भावः ॥

ब्रह्मपथे-वेदपथे

| | |
|---|---|
| शिवाद्वैतपथविधिः | रु ०— ८—० |
| केवलाद्वैतपथप्रतिषेधः | १— ०—० |
| वैष्णवपथप्रतिषेधः | ०—१२—० |
| व्यासपथः | १— ०—० |
| ब्रह्मपथः सव्याख्यः समग्रः | ३— ०—० |
| वेदान्तार्थपरिष्कारतारहारः | १— ८—० |

*For Copies Apply to:—*

MAHOPADHYAYA
Brahma Sree Mudigonda Nagalinga Sastry
TENALI, Guntur District.